# भारतमञ्जरी/हरिवंशः

< भारतमञ्जरी

**हरिवंशः**

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।

देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ १९.१ ॥

मुनिः पुनातु वो व्यासः सदा संनिहिता सुखे ।

त्रिमार्गगा मधुमती यस्य शुद्धा सरस्वती ॥ १९.२ ॥

शौनकेन पुनः पृष्टो नैमिषे लौमहर्षणिः ।

अभ्यधादद्भुतं भूमौ संभवं कैटभद्विषः ॥ १९.३ ॥

आकर्ण्य भारतकथां प्रहृष्टो जनमेजयः ।

अपृच्छद्वैष्णवं वंशं वैशम्पायनमादरात् ॥ १९.४ ॥

स पृष्टः पृषुवंशेन पार्थिवेन कथां हरेः ।

जगाद जगतां हेतुं प्रणम्य प्रयतः प्रभुम् ॥ १९.५ ॥

अप एवासृजत्पूर्वं भगवान्विष्णुरव्ययः ।

तासु वीर्यं नराख्यासु येन नारायणः स्मृतः ॥ १९.६ ॥

तदण्डमभवद्वैमं यस्मिञ्जातः प्रजापतिः ।

असृजन्मनुमुख्यांश्च कर्दमाद्यान्प्रजापतीन् ॥ १९.७ ॥

दक्षं च सर्वभूतानि यस्य दौहित्रसंततिः ।

पृथक्पृथक्च राज्यानि सोमादिनामकल्पयत् ॥ १९.८ ॥

कदाचिदत्रिवंशस्य सुतोऽङ्गस्य प्रजापतेः ।

मृत्युपुत्र्यां सुनीथायां जातः स्थितिविलोपकृत् ॥ १९.९ ॥

स्ववर्वो नामाभवद्राजा किल्बिषात्कलुषाशयः ।

प्रजानां विधिवैमुख्यान्मूर्तिमानिव विप्लवः ॥ १९.१० ॥

अनुनीतोऽपि बहुशः स यदा नाभवद्वशी ।

तदा निगृह्यातिबलं मुनयस्तमपातयन् ॥ १९.११ ॥

ममन्थुरस्य ते सव्यमूरुं क्रोधानलाकुलाः ।

ततः समुदभूत्स्वर्वो नरः कृष्णो भयाकुलः ॥ १९.१२ ॥

निषीदेत्यत्रिणोक्तोऽसौ निषादजनकोऽभवत् ।

ततो ममन्थुर्मुनयः पाणिं वेनस्य दक्षिणम् ॥ १९.१३ ॥

ताम्राङ्गुलिदलात्पाणिकमलादुदभूत्ततः ।

पितामह इव श्रीमान्पृथुः पृथुललोचनः ॥ १९.१४ ॥

धनुराजगवं तस्य विबिभौ हेमवर्षिणः ।

निजज्वालावली धाम दीप्तस्येव विभावसोः ॥ १९.१५ ॥

तत्प्रसादाद्दिवं याते वेने वैन्योऽथ भूभुजाम् ।

आद्यो रत्नाकरैरेत्य रत्नौरभ्यर्चितः स्वयम् ॥ १९.१६ ॥

जले शैले च तस्याभूदभग्नप्रणया गतिः ।

तं तुष्टुवुर्नवोत्पन्नाः सूतमागधबन्दिनः ॥ १९.१७ ॥

प्रजानां वृत्तये भूमिस्तेनादिष्टा तरस्विना ।

भीता दुद्राव गौर्भूत्वा धन्वी तामाद्रवत्स च ॥ १९.१८ ॥

सा लोकान्ब्रह्मलोकान्तानशेषान्विद्रुता जवात् ।

तमेवात्तायुधं पश्चादपश्यद्वलितानना ॥ १९.१९ ॥

परित्राणमपश्यन्ती सा तमूचे कृताञ्जलिः ।

कोपं जहि महीपाल योषितं परिरक्ष माम् ॥ १९.२० ॥

विना धरित्रीं तिष्ठन्ति प्रजानाथ कथं प्रजाः ।

इति श्रितिवचः श्रुत्वा वीतकोपोऽब्रवीन्नृपः ॥ १९.२१ ॥

प्रजावृत्तिनिमित्तोऽयं समारम्भो मम त्वियि ।

बहूनां प्राणरक्षार्थमेकहिंसा प्रशस्यते ॥ १९.२२ ॥

विस्तार्य स्वयमात्मानं धारयिष्याम्यहं प्रजाः ।

न चेद्वितर लोकानां वृत्तिं पुत्री च मे भव ॥ १९.२३ ॥

इति क्षितिभुजादिष्टा जगाद जगती नता ।

अहं वृत्ति विधास्यामि प्रजानां त्वत्सुता सती ॥ १९.२४ ॥

देशान्समीकुरु विभो शिलाकूटविशङ्कटान् ।

सर्वस्यापि भवत्येतद्यथा क्षीरं स्त्रुंत माय ॥ १९.२५ ॥

निशम्यैतत्पृथुयशाः पृथुः पृथुशिलोच्चयान् ।

पृथक्चक्रे धनुष्कोट्या सुस्पष्टा येन भूरभूत् ॥ १९.२६ ॥

ततः सस्यानि पृथिवीं स्वनामाङ्कां दुदोह सः ।

मनुं स्वायंभुवं वत्सं कृत्वा करपुटोदरे ॥ १९.२७ ॥

श्रूयते मुनिभिर्दुग्धा तपो ब्रह्म च बूः पुरा ।

वत्सः सोमो गुरुर्देग्धा पात्रमासीच्च काञ्चनम् ॥ १९.२८ ॥

रूप्यपात्रे च पितृभिर्दुग्धेयं वसुधा सुधाम् ।

यमं वत्सं समादाय तथा दोग्धारमन्तकम् ॥ १९.२९ ॥

अलाबुपात्रे नागैश्च विषं दुग्धा बलप्रदम् ।

धृतराष्ट्रं च दोग्धारं कृत्वा वत्सं च तक्षकम् ॥ १९.३० ॥

असुरैरायसे पात्रे मायां दुग्धा वसुंधरा ।

वत्सस्तदाभूत्प्रह्लादो दोग्धा च दनुजो मधुः ॥ १९.३१ ॥

यक्षैरपि पुरा दुग्धा वत्सं कृत्वा धनेश्वरम् ।

अन्तर्धानकरं क्षीरमामपात्रे भयंकरम् ॥ १९.३२ ॥

रुधिरं राक्षसैर्दुग्धा वत्सकेन सुमालिना ।

पद्मपात्रे शुभान्गन्धान्दुग्धा गन्धर्वकिंनरैः ॥ १९.३३ ॥

पर्वतैर्मेरुमादाय दोग्धारं शैलभाजने ।

रत्नौषधिगणान्दुग्धा वत्सं कृत्वा हिमालयम् ॥ १९.३४ ॥

वृक्षैः पालाशपात्रे च दुग्धा पुष्पं फलं ततः ।

दोग्धृत्वमगमत्सालस्तदा प्लक्षश्च वत्सताम् ॥ १९.३५ ॥

सर्वदा सर्वदा भूमिरित्येवं शासनात्पृथोः ।

आदिराजस्य जयिनः कर्म यस्यैतदद्भुतम् ॥ १९.३६ ॥

▪ ▪ ▪ ▪ ▪ पृथिवीदोहः ॥ १ ॥ *****

श्रुत्वेति वैन्यचरितं विस्मितो जनमेजयः ।

मुनिं मन्वन्तरकथामपृच्छत्सोऽप्यभाषत ॥ १९.३७ ॥

स्वायंभुवो मनुः पूर्वमभूत्सप्तर्षयस्तदा ।

मरीच्यत्रिपुलस्त्याद्या ........ ॥ १९.३८ ॥

........ ........ ।

........ देवाश्च तुष्टिताभिधाः ॥ १९.३९ ॥

औत्तमाख्यस्तृतीयोऽभून्मनुः सप्तर्षयस्तदा ।

वसिष्ठपुत्रास्तस्यासन्नृभवश्च दिवौकसः ॥ १९.४० ॥

तामसोऽभून्मनुस्तुर्यो यस्य सप्तर्षयोऽन्तरे ।

बभूवुः पृथुगार्ग्याद्याः सभ्याश्च त्रिदिवौकसः ॥ १९.४१ ॥

रैवतः पञ्चमोऽप्यासीन्मनुः सप्तर्षयस्तदा ।

वेदबाहुमुखाश्चासन्नभूतरजसः सुराः ॥ १९.४२ ॥

चाक्षुषोऽथ मनुः षष्ठो भृगुमुख्या यदन्तरे ।

अभवन्सप्त मुनयो लेखसंज्ञास्तथामराः ॥ १९.४३ ॥

एतेषु बहुपुत्रेषु षट्सु यातेषु सांप्रतम् ।

वर्तते सप्तमः श्रीमानद्य वैवस्वतो मनुः ॥ १९.४४ ॥

कश्यपोऽत्रिर्वसिष्ठश्च भारद्वाजोऽथ गौतमः ।

कौशिको जमदग्निश्च सप्तैतेऽद्य महर्षयः ॥ १९.४५ ॥

साश्विरुद्राश्च मरुतो वस्वादित्याश्च देवताः ।

इक्ष्वाकुप्रमुखाश्चास्य मनोः पुत्रा महीभुजः ॥ १९.४६ ॥

सावर्णोऽथ मनुर्भावी तस्य सप्तर्षयोऽन्तरे ।

रामव्यासकृपात्रेयद्रौणिगालवकाश्यपाः ॥ १९.४७ ॥

चत्वारो मेरुसावर्णा भाविनो मनवः परे ।

तेषां नव नवाश्चान्ये ते ते सप्तर्षयः क्रमात् ॥ १९.४८ ॥

रोच्यो नाम मनुः षष्ठो भौत्याख्यः सप्तमो मनुः ।

चतुर्दशैते मनवो येभ्यो मन्वन्तराः क्रमात् ॥ १९.४९ ॥

चतुर्युगानां पूर्णानां साग्राणामेकसप्ततिः ।

मन्वन्तराणां प्रत्येकमेष संख्याकृतोऽवधिः ॥ १९.५० ॥

चतुर्दशसु यातेषु तेषु मन्वन्तरेष्वथ ।

कल्पक्षये जगद्विष्णोरन्तः सर्वं प्रलीयते ॥ १९.५१ ॥

पुनश्च भवतीत्येवं चक्रवत्परिवर्तते ।

कल्पसंक्षयलक्षाणामनादिनिधना गतिः ॥ १९.५२ ॥

सांप्रतस्य मनोस्तावदस्मिन्वैवस्वतेऽन्तरे ।

हरिवंशप्रसङ्गेन श्रूयतामथ संभवः ॥ १९.५३ ॥

▪ ▪ ▪ ▪ ▪ मन्वन्तरवर्णनम् ॥ २ ॥ *****

आदित्यः कश्यपाज्जातो विवश्वान्महसां निधिः ।

उग्ररूपोऽभवद्घोरदीप्तिसंतानसंचयः ॥ १९.५४ ॥

दिष्टया नायं मृतोऽण्डस्थः प्रवृद्धेन स्वतेजसा ।

स्नेहादित्युदितः पित्रा मार्तण्ड इति विश्रुतः ॥ १९.५५ ॥

संज्ञा नामाभवत्तस्य लावण्यनलिनी प्रिया ।

बहुकौतुकनिर्मातुः पुत्री त्वष्टुः प्रजापतेः ॥ १९.५६ ॥

तस्यामजीजनत्पुत्रं श्राद्धदेवं मनुं रविः ।

यमं कन्यां च यमुनां यमलत्वात्कृताभिधौ ॥ १९.५७ ॥

तीक्ष्णांशोरथ तद्रूपं विकृतं घोरतेजसः ।

न सेहे धृतिधैर्यापि संज्ञा कान्तिकुमुद्वती ॥ १९.५८ ॥

तुल्यरूपां निजच्छायां मायायोगविनिर्मिताम् ।

सा धृत्वा स्वपतेर्गूढं जगाम जनकान्तिकम् ॥ १९.५९ ॥

पत्युः समीपं गच्छेति निरस्ता तेन मानिना ।

लज्जिता वडवा भूत्वा प्रययावुत्तरान्कुरून् ॥ १९.६० ॥

ततः संज्ञासवर्णायां सावर्णाख्यः परो मनुः ।

रवेरज्ञातवृत्तस्य च्छायायामभवत्सुतः ॥ १९.६१ ॥

शनैश्चरो द्वितीयश्च स्नेहमभ्यधिकं तयोः ।

छाया चकार वात्सल्यान्न तथापरपुत्रयोः ॥ १९.६२ ॥

क्षमी ज्येष्ठो मनुः सेहे तद्यमस्तु न चक्षमे ।

बाल्यात्तेनाहता दैवाद्बालेन जननी पुरा ॥ १९.६३ ॥

सा तं शशाप कुपिता चरणास्ते पतन्त्विति ।

तच्छ्रुत्वा शङ्कितो भास्वान्कोपात्तां शप्तुमुद्यतः ॥ १९.६४ ॥

गत्वा त्वष्टुर्गृहं तूर्णं संज्ञावृत्तान्तमभ्यधात् ।

तेजस्तवैतदत्युग्रं संज्ञा न सहते सती ॥ १९.६५ ॥

प्रच्छन्नं तत्र वडवा वने चरति शाद्वलम् ।

इति त्वष्टुर्गिरा ज्ञात्वा तेनैवारोपितो भ्रमम् ॥ १९.६६ ॥

अशातयन्निजं तेजो दयितादर्शनोत्सुकः ।

तेजसा तेन विदधे त्वष्टा चक्रं सुदर्शनम् ॥ १९.६७ ॥

दैत्यान्धकारसंहारसहायं कैटभद्विषः ।

ततः कमलिनीकान्तः कान्तरूपो दिवाकरः ॥ १९.६८ ॥

गत्वा ददर्श विपिने वडवारूपिणीं प्रियाम् ।

तत्र तेन विवेष्टन्ती ह्यक्रान्ता हयरूपिणा ॥ १९.६९ ॥

परावृत्तमुखैवासीत्परसंस्पर्शशङ्कया ।

ततो विवस्वतो वीर्यं नासिकाथूत्कृतेन सा ॥ १९.७० ॥

तत्ससर्ज यतो जातौ नासत्यावश्विनौ यमौ ।

अथ संज्ञा परिज्ञाय सौम्यं देवं दिवाकरम् ॥ १९.७१ ॥

निजरूपवती प्रायाद्गृहं तदनुयायिनी ।

मनुः प्रजापतिससीत्पितॄणामधिपो यमः ॥ १९.७२ ॥

त्रिदशानां च भिषजावश्विनौ यमुना सरित् ।

भावी प्रजापतिश्चान्यः सवर्णातनयो मनुः ॥ १९.७३ ॥

ग्रहाणां सप्तमश्चासीन्मन्दचारी शनैश्वरः ।

इक्ष्वाकुशिबिशर्यातिनाभागाद्याः सुता मनोः ॥ १९.७४ ॥

तेषु जातेषु पुत्रार्थी मित्रावरुणयोर्मनुः ।

इष्टिं चकार तत्रास्य सुताभूल्ललितद्युतिः ॥ १९.७५ ॥

इडा नाम स्फुरद्रत्नभूषणोद्द्योतिताम्बरा ।

प्रणम्य पद्मवदना मनुं तच्छासनानुगा ॥ १९.७६ ॥

मित्रावरुणयोर्वासं तदंशास्मीति सा ययौ ।

सदाचारोचिता ताभ्यां सा पुत्रीत्यभिनन्दिता ॥ १९.७७ ॥

तद्वरं प्राप पुत्रस्त्वं भविष्यसि मनोरिति ।

ततः प्रतिनिवृत्ता सा व्रजन्ती गजगामिनी ॥ १९.७८ ॥

दृष्ट्वा हरिणशावाक्षी बुधेन शशिसूनुना ।

तत्संगमात्समासाद्य पुरूरवसमात्मजम् ॥ १९.७९ ॥

स्त्रीरूपं सा समुत्सृज्य प्रद्युम्नाख्योऽभवन्नृपः ।

उत्कलो विनताश्वश्च गयश्चेति तदात्मजः ॥ १९.८० ॥

इक्ष्वाकोस्तुमुपादोऽभूत्ककुत्स्थस्तस्य चात्मजः ।

तद्वंशे कुवलाश्वोऽभूदुत्तङ्कवचसा च यः ॥ १९.८१ ॥

वालुकान्तर्गतं घोरं धुन्धुं नाम महासुरम् ।

जघान यस्य निःश्वासैः पृथिवी समदह्यत ॥ १९.८२ ॥

कुवलाश्वस्य नृपतेर्जातस्त्वय्यारुणिः कुले ।

तेन सत्यव्रतो नाम पौरकन्यापहारतः ॥ १९.८३ ॥

पुत्रः शप्तोऽन्त्यजातिस्त्वमवाप्तो विजनेऽवसत् ।

अत्रान्तरे विना वर्षं कृच्छ्रे द्वादशवार्षिके ॥ १९.८४ ॥

तत्याज ससुतां भार्यां विश्वामित्रोऽम्बुधेस्तटे ।

सां मध्यमं गले बद्ध्वा विक्रेतुं प्रस्तुता सुतम् ॥ १९.८५ ॥

सत्यव्रतेन कृपया वारिता वृत्तिदायिना ।

विश्वामित्रसुतश्चाभूद्गलबन्धः स गालवः ॥ १९.८६ ॥

स त्यागाद्वारितः किं मे न पितेति पुरोहिते ।

सत्यव्रतो राजपुत्रो वसिष्ठे मन्युमानभूत् ॥ १९.८७ ॥

कामधेनुं स तस्याथ चरन्तीं शापमोहितः ।

निहत्य गाधिपुत्राणामात्मनश्चाशनं व्यधात् ॥ १९.८८ ॥

कोपकत्वात्पितुर्धेनुवधादप्रोक्षिताशनात् ।

शापशङ्कुत्रंय तस्य वशिष्ठः समपातयत् ॥ १९.८९ ॥

तस्य त्रिशङ्कुसंज्ञस्य विश्वामित्रः पितुः पदम् ।

दत्वाभूद्याजको येन सदेहस्त्रिदिवं ययौ ॥ १९.९० ॥

तस्य पुत्रो हरिश्चन्द्रो राजसूये रराज यः ।

सगरस्तत्कुले राजा यत्सुतैः सागरः कृतः ॥ १९.९१ ॥

मातुः सपत्नीदत्तेन जातः सह गरेण यः ।

प्रत्यन्तदेशाञ्जित्वासौ पितुः पूर्वापकारिणः ॥ १९.९२ ॥

निःस्वाध्यायवषट्कारान्विदधे लक्षणाङ्कितान् ।

चकार मुण्डशिरसः काम्बोजान्वधरक्षणात् ॥ १९.९३ ॥

शशकोर्धशिरोमुण्डान्मुक्तकेशांश्च पारतान् ।

पह्लवान्यवनाद्यांश्च श्मश्रुचिह्नानकल्पयत् ॥ १९.९४ ॥

वंशे तस्य दिलीपोऽभूत्तस्य सूनुर्भगीरथः ।

दुहितृत्वमगाद्यस्य भुवि भागीरथी नदी ॥ १९.९५ ॥

कुले तस्याभवद्राजा रामो दशरथात्मजः ।

राजर्षिवंशा बहवो बभूवुस्तत्सुतात्कुशात् ॥ १९.९६ ॥

इक्ष्वाकोरित्ययं वंशस्तद्भ्रातुस्तु मरिष्यतः ।

शका बभूवुस्तनया नाभागस्य सुतोऽभवत् ॥ १९.९७ ॥

अम्बरीषो महीपालो वृष्णेः पुत्राश्च वृष्णयः ।

रणधृष्टाः शिबेः पुत्राः शर्यातिरभवत्सुता ॥ १९.९८ ॥

सुकन्या च्यवनेनोढा पुत्रश्चान्तभूपतिः ।

रवेती तस्य तनया स पुरा सहितस्तया ॥ १९.९९ ॥

ब्रह्मलोकं ययौ श्रोतुं गान्धर्वं ब्रह्मणोऽन्तिके ।

ततो बहुयुगे काले व्यतीते क्षणलेशवत् ॥ १९.१०० ॥

अपश्यत्स्वपुरीमेत्य द्वारकां वृष्णिभिर्वृताम् ।

अस्पृष्टां कालकलया ब्रह्मलोकनिवासतः ॥ १९.१०१ ॥

प्रददौ बलभद्राय बालामेव स रेवतीम् ।

दत्त्वा च तनयां प्रायात्तपसे मेरुकन्दरम् ॥ १९.१०२ ॥

इक्ष्वाकोरनुजः षष्ठो रिष्टाख्यस्तस्य चात्मजौ ।

वैश्यौ ब्राह्मणतां प्राप्तौ तपोयोगादकल्मषौ ॥ १९.१०३ ॥

करूषः सप्तमो यस्तु कारुषास्तत्सुता नृपाः ।

पृथुकश्चाष्टमः शूद्रो बभूव गुरुगोवधात् ॥ १९.१०४ ॥

एते बभूवुरिक्ष्वाकोर्भ्रातरोऽष्टौ मनोः सुताः ।

इत्येते श्राद्धदेवस्य भुवि वंशधरा मनोः ॥ १९.१०५ ॥

- - - - - मनुवंशः ॥ ३ ॥ *****

पृष्टः श्राद्धप्रसङ्गेन पितृकल्पं महीभुजा ।

मुनिः प्राहावदद्भीष्मः प्रश्नान्ते यद्युधिष्ठिरम् ॥ १९.१०६ ॥

पितरः पूजिताः श्राद्धे त्रिभिः पिण्डैस्त्रिपौरुषैः ।

देवतत्वेन पुष्णन्ति जन्तून्नानागतिष्वपि ॥ १९.१०७ ॥

शंतनोरुद्यते पिण्डे श्राद्धकाले मया पितुः ।

उत्तस्थौ कङ्कणोदारः करः कमलकोमलः ॥ १९.१०८ ॥

तं विलोक्य मया पिण्डे कुशेष्वेव समर्पिते ।

शास्त्राक्रियानुवर्तित्वात्तत्तोषजनको मम ॥ १९.१०९ ॥

स्वच्छन्दमरणं तस्मादवाप्याहं वरं वरम् ।

तेनोपदिष्टं तत्कालं मार्कण्डेयमुपस्थितम् ॥ १९.११० ॥

अपृच्छं दैवतं श्राद्धं फलं च पितृयाजिनाम् ।

सोऽब्रवीन्मेरुशिखरे मया पृषष्टस्तपस्यता ॥ १९.१११ ॥

सनत्कुमारे भगवान्प्राहैतत्तेजसां निधिः ।

ब्रह्मा पुरा सुरान्दृष्ट्वा दृष्ट्वा तानात्मयाजिनः ॥ १९.११२ ॥

कथं नैते यजन्ते मामिति शापादमोहयत् ।

ते नष्टसंविदः सर्वे प्रसाद्य कमलोद्भवम् ॥ १९.११३ ॥

प्रायश्चित्तं निजान्पुत्रान्पप्रच्छुस्तस्य शासनात् ।

प्रायश्चित्तैस्ततः पूताः क्रियाज्ञानोपदेशतः ॥ १९.११४ ॥

गुरुत्वात्स्वसुतैरुक्ता गम्यतां पुत्रका इति ।

त एते पितरः पूज्या देवानां तनया अपि ॥ १९.११५ ॥

येषां श्राद्धं विना प्राहुस्त्रिदशा निष्फलाः क्रियाः ।

तद्विहीनेषु यागेषु फलमश्नन्ति राक्षसाः ॥ १९.११६ ॥

अन्योन्यं पितरस्तस्माद्देवाः पितृगणा अपि ।

श्राद्धेनाप्यायते सोमः स पुष्णात्यखिलाः प्रजाः ॥ १९.११७ ॥

श्राद्धेन पितरः प्रीता नृणां पितृपितामहान् ।

आप्याययन्ति सर्वत्र तिर्यग्योनिगतानपि ॥ १९.११८ ॥

चत्वारस्तद्गणा मूर्ता मूर्तिहीनास्त्रयो गणाः ।

सुधाभुजो योगजुषो वैराजा इति विश्रुताः ॥ १९.११९ ॥

मेनाख्या मानसी तेषां कन्या हिमगिरेः प्रिया ।

मैनाको यत्सुतः श्रीमान्पिता क्रौञ्चमहागिरेः ॥ १९.१२० ॥

मेनायास्तनयास्तिस्रो याश्चेरुर्दुश्चरं तपः ।

ज्येष्ठा तासामपार्णाख्या भवानी भववल्लभा ॥ १९.१२१ ॥

उ मेति तपसो मात्रा वारिताभूदुमेति या ।

देवलस्यैकपर्णाख्या द्वितीयाभून्मुनेर्वधूः ॥ १९.१२२ ॥

जैगीषव्यस्य भार्याभूत्तृतीयाप्येकपाटला ।

पुत्री मरीचिपुत्राणां पितॄणामपि मानसी ॥ १९.१२३ ॥

अच्छोदाख्या वरसरित्प्रागच्छोदसरःस्नुता ।

अपरिज्ञाय पितरं साभिलाषा विलोक्य सा ॥ १९.१२४ ॥

भ्रष्टा पपात तच्छापात्तत्प्रसादकृतावधिः ।

अष्टाविंशे द्वापरे सा संभूता मत्स्ययोनिजा ॥ १९.१२५ ॥

असूत या सुतं व्यासं गन्धकाली पराशरात् ।

पुलस्त्यपुत्राः पितरो दिवि बर्हिषदः परे ॥ १९.१२६ ॥

मानसी कन्यका तेषां पीवरी नाम योगिनी ।

जनयिष्यत्यपत्यानि यस्यां व्याससुतः शुकः ॥ १९.१२७ ॥

पुत्रीं च कृत्वा जननीं ब्रह्मदत्तस्य भूपतेः ।

अमूर्ताः कर्मसंन्यासादेते पितृगणास्त्रयः ॥ १९.१२८ ॥

सोमदेवान्मानवादीन्पूजिता भावयन्ति ये ।

मूर्तास्तु सोमपा नाम पितरोऽन्ये सुधाभुजः ॥ १९.१२९ ॥

तेषां गौर्मानसी कन्या यजन्ते ब्राह्मणाश्च ताम् ।

अन्ये त्वङ्गिरसः पुत्राः पितरः श्रद्धवर्जिताः ॥ १९.१३० ॥

यष्टारः क्षत्रियास्तेषां यशोदाख्या च कन्यका ।

सहस्रयाजिनो मात्रा दिलीपस्य महीपतेः ॥ १९.१३१ ॥

आज्यपाः पितरः पुत्राः कश्यपस्य प्रजापतेः ।

यजन्ते तान्सदा वैश्या कन्या तेषां च मानसी ॥ १९.१३२ ॥

विरजा नाम जननी ययातेः पृथिवीपतेः ।

सुकाला नाम पितरो वशिष्ठस्य मुनेः सुताः ॥ १९.१३३ ॥

शूद्राणामेव ते पूज्यास्तत्पुत्री नर्मदा सरित् ।

कुरुकुत्सप्रिया यस्यास्त्रसद्दस्तुः सुतो नृपः ॥ १९.१३४ ॥

एते पितृगणा मूर्ताश्चत्वारो वर्णदैवतम् ।

येषां युगे युगे पूजां श्राद्धदेवोऽभ्यधान्मनुः ॥ १९.१३५ ॥

राजतं राजताङ्कं वा यातं तेषां स्वधाभुजाम् ।

शस्त्रं श्राद्धे सोमवह्निमनुपूजापुरः सरे ॥ १९.१३६ ॥

त एते पितरः पूज्याः क्रोधहीनाः प्रसादिनः ।

संकल्पकल्पलतिका भक्तिर्येषां महाफला ॥ १९.१३७ ॥

धर्मापचाराद्विभ्रष्टा ब्राह्मणाः पितृपूजया ।

यथा स्वपदमेष्यन्ति तत्सर्वं द्रक्ष्यसि क्रतौ ॥ १९.१३८ ॥

श्राद्धभावं विजानीहि स्वयमित्यभिधाय सः ।

सनत्कुमारो दिव्यं मे चक्षुर्दत्त्वा तिरोदधे ॥ १९.१३९ ॥

ततोऽपश्यं कुरुक्षेत्रे विप्रान्कालेन सप्त तान् ।

वाग्दुष्टः क्रोधनो हिंस्रः पिशुनः स्वस्टमः कविः ॥ १९.१४० ॥

पितृवर्ती चेति नाम सदृशाकारसेविनः ।

अथ कौशिकदायादा गुरोर्गार्ग्यस्य ते पुरा ॥ १९.१४१ ॥

प्रस्थिताः पथि गां मूढाः क्षुधार्ता हन्तुमुद्ययुः ।

यदा निवार्यमाणास्ते कविना स्वस्टमेन च ॥ १९.१४२ ॥

न निवृत्तास्तदा कोपात्पितृवर्ती जगाद तान् ।

सर्वथैतदकार्यं वो गर्हितं सर्वजन्तुभिः ॥ १९.१४३ ॥

श्राद्धपूर्वोऽयमारम्भः क्रियतां यदि दुर्ग्रहः ।

एतदाकर्ण्य ते सर्वे तदुक्तं चक्रिरे विधिम् ॥ १९.१४४ ॥

ततस्ते हिंसया काले शप्ताजायन्त लुब्धकाः ।

दशार्णेषु स्वकर्मस्थाः सत्यशीलपरायणाः ॥ १९.१४५ ॥

जन्मान्तरे श्राद्धफलाल्लुप्ता तेषां न तु स्मृतिः ।

निर्वैरी निर्वृतिः क्षान्तो निर्मन्युर्वैधसः कृतिः ॥ १९.१४६ ॥

मातृवर्ती च ते व्याधाः पितृसेवाकृतक्षणाः ।

धनूंषि पित्रोः पानीये विहाय व्यसवोऽभवन् ॥ १९.१४७ ॥

ततः फुल्ललतापुञ्जकुञ्जे कालाञ्जने गिरौ ।

त्रासायासविविग्नास्ते जाता जातिस्मरा मृगाः ॥ १९.१४८ ॥

उन्मुखो नित्यचकितः स्तब्धवर्णः सुलोचनः ।

घस्मरः पिण्डितो नादी चेति चेष्टोचिताभिधाः ॥ १९.१४९ ॥

ते ब्रह्मचारिणः क्षान्ताः पूर्वविद्याविवासिताः ।

विहारिणो मेरुतटी गत्वा प्राणान्पर्यत्यजन् ॥ १९.१५० ॥

अद्यामि मेरुगामिन्यः कालाञ्जनतटोत्थिताः ।

तेषां कनकूटेषु दृश्यन्ते पादपङ्क्तयः ॥ १९.१५१ ॥

ततः शुचिसरिद्द्वीपे लहरीधैतसैकते ।

बभूवुश्चक्रवाकास्ते तरुणा ब्रह्मचारिणः ॥ १९.१५२ ॥

निर्ममो निःस्पृहः क्षान्तो निर्वैरो निष्प्रतिग्रहः ।

निर्वृतो निभृतश्चेति योगिनस्ते विहङ्गमाः ॥ १९.१५३ ॥

जातास्तत्र च ते हंसास्तपोयोगपरायणाः ।

वालानिलाकुलोत्फुल्लकमलोत्पलमालिने ॥ १९.१५४ ॥

सलिले विलसन्त्येते विभ्राजं नाम भूपतिम् ।

ददृशुः पद्मवदनावृन्दैर्जितसरोवरम् ॥ १९.१५५ ॥

पातुं यदृच्छयायातं तीरोपान्तलतावने ।

शचीपतिमिवालोक्य तं कनीयान्विहङ्गमः ॥ १९.१५६ ॥

तस्य राज्यस्पृहां चक्रे तदैश्वर्यहृताशयः ।

द्वौ चाभूतां खगौ तस्य स्पृहानुगतमानसौ ॥ १९.१५७ ॥

ततः कालेन ते सर्वे सारसा व्यसवोऽभवन् ।

वि(वै)भ्राजं तद्वनमभूत्सरश्च नृपसेवितम् ॥ १९.१५८ ॥

विभ्राजस्याथ पुत्रोऽभूदणुहो नाम भूपतिः ।

तस्मै वितृणां दौहित्रीं पुत्रीं व्याससुतः शुकः ॥ १९.१५९ ॥

कृत्वीं नाम ददौ दिव्ययोगिनामधिदेवताम् ।

तस्याः स हंसः पुत्रोऽभूद्योगभ्रष्टो हतस्मृतिः ॥ १९.१६० ॥

ब्रह्मदत्त इति ख्यातः काम्पिल्ये नगरे नृपः ।

पाञ्चालपु(क)ण्डरीकाख्यौ तस्यास्तां सचिवौ नृपौ ॥ १९.१६१ ॥

हंसौ स्पृहाभ्रष्टयोगौ यौ तौ तदनुगाशयौ ।

जातिस्मरास्तु चत्वारो जाताः सब्रह्मचारिणः ॥ १९.१६२ ॥

ब्रह्मदत्तस्य दयिता देवलस्यात्मजा मुनेः ।

बभूव संनतिर्नाम मानिनी मदिरावनिः ॥ १९.१६३ ॥

स कदाचिल्लतालास्यव्यालोलपवने वने ।

सेव्यमानस्तया तन्व्या विजहार स्मरोपमः ॥ १९.१६४ ॥

सर्वप्राणिरुतज्ञोऽसौ तत्र प्रणयकोपतः ।

पिपीलकायाः शुश्राव भर्तुस्तां तां प्रसादनाम् ॥ १९.१६५ ॥

स तच्छ्रुत्वा चलच्चारुकपोलफलको नृपः ।

जहास दयिताकण्ठे कुर्वन्मुक्तावलीमिव ॥ १९.१६६ ॥

कस्मादकस्मान्मे नाथो हसतीति विलज्जिता ।

साभवत्पद्मवदना चन्द्रोदय इवाब्जिनी ॥ १९.१६७ ॥

पिपीलकरुताश्चर्ये कथितेऽपि महीभुजा ।

प्राणत्यागैकसंकल्पा तदसत्यममन्यत ॥ १९.१६८ ॥

दयितादीर्घकोपेन विविग्नो वसुधाधिपः ।

निराहारव्रतो विष्णुं ददर्श प्रयताशयः ॥ १९.१६९ ॥

कुशलं भविता प्रातस्तवेति हरिशासनात् ।

प्रभाते रथमारुह्य पुरं ससचिवोऽविशत् ॥ १९.१७० ॥

अत्रान्तरे तैश्चतुर्भिर्द्विजैर्जातिस्मरैः पिता ।

विसृष्टः श्रावय नृपं श्लोकमित्याजगाम तम् ॥ १९.१७१ ॥

स समासाद्य भूपालं सचिवाभ्यां सह स्थितम् ।

इदमाश्रावयद्विप्रः किमप्युत्सुकमानसम् ॥ १९.१७२ ॥

सप्त दाशा दशार्णेषु गिरौ कालाञ्जने मृगाः ।

चक्रवाका नदीद्वीपे हंसाः सरसि मानसे ॥ १९.१७३ ॥

वयं तेऽद्य कुरुक्षेत्रे जाता वेदविदो द्विजाः ।

गन्तारो दूरमध्वानं यूयं किमवसादिनः ॥ १९.१७४ ॥

श्रुत्वैतत्स्मृतयोगात्मा निःस्पन्दकरणो नृपः ।

सचिवाभ्यां सह परं धाम तच्च समाययौ ॥ १९.१७५ ॥

श्राद्धप्रभावादित्येतत्क्षपयित्वोग्रपातकम् ।

याताः कौशिकदायादा योगिनः परमं पदम् ॥ १९.१७६ ॥

शान्तनोः शासनादेतन्मार्कण्डेयाच्छ्रुतं मया ।

ब्रह्मदत्तस्य पुत्रोऽभूद्विश्वक्सेनो महीपतिः ॥ १९.१७७ ॥

दण्डसेनः सुतस्तस्य भल्लाटश्च तदात्मजः ।

यः कर्णेन पुरा वीरो दिग्जये विनिपातितः ॥ १९.१७८ ॥

भल्लाटस्याभवत्सूनुर्दुर्नयी जनमेजयः ।

उग्रायुधोऽथ तत्पुत्रः पापाचारो निरङ्कुशः ॥ १९.१७९ ॥

त्रिदिवं शन्तनौ याते हर्तुं सत्यवतीं बलात् ।

मनश्चकार दुर्वृत्तस्ततो यधि मया हतः ॥ १९.१८० ॥

इति श्राद्धफलं भीष्मो बभाषे धर्मनन्दनम् ।

श्राद्धेनाप्यायते सोमो वृष्णयो यस्य वंशजाः ॥ १९.१८१ ॥

- - - - - पितृकल्पः ॥ ४ ॥ *****

अत्रिश्चचार भगवान्मौनी मुनिवरः पुरा ।

तपो वर्षसहस्राणि दिव्यानि त्रीणी निश्चलः ॥ १९.१८२ ॥

तस्याथ निर्निमेषस्य शरीरं ब्रह्मचारिणः ।

अभूद्दिव्यामृतमयं कान्तं दुग्धोदधेरिव ॥ १९.१८३ ॥

ततः सुस्राव नेत्राभ्यामत्रेस्तद्दशधा स्रुतम् ।

अमृतं दिक्षु दशसु प्रभासंपूरिताम्बरम् ॥ १९.१८४ ॥

वृतं तद्दशभिर्गर्भे दिग्भिर्यत्नेन दुःसहम् ।

सोमत्वमाप्तं सहसा पपात भुवि भास्वरम् ॥ १९.१८५ ॥

तस्मिन्निपतिते तूर्णं कम्पिते भुवनत्रये ।

रथे वेदमये ब्रह्मा सहस्राश्वे तमादधे ॥ १९.१८६ ॥

तं रथस्थं मुनिवरा देवास्त्रैलोक्यभावनम् ।

तुष्टुवुस्तेजसो वृद्धयो सर्वजिद्येन सोऽभवत् ॥ १९.१८७ ॥

वत्सराणां चकारासौ पूर्णं पद्मशतं तपः ।

उत्पन्नास्तेजसा तस्य दिव्यौषधिसुधागणाः ॥ १९.१८८ ॥

राजा राज्याभिषिक्तोऽथ ब्रह्मणा ब्राह्मणाधिपः ।

वल्लभो दक्षपुत्रीणां राजसूये रराज सः ॥ १९.१८९ ॥

सुरसिद्धर्षिगन्धर्वसेव्यस्त्रिभुवनेश्वरः ।

लोकानविनयोत्सेकाश्चचार श्रीविशृङ्खलः ॥ १९.१९० ॥

जहार तरसा सोऽथ तारां नाम बृहस्पतेः ।

वल्लभां विभवोद्भूतभूतेनोद्भाव्यते न कः ॥ १९.१९१ ॥

त्रिदशैर्बोध्यमानोऽपि न स तत्याज तां यदा ।

तदा बृहस्पतेः पक्षं शुक्रो रुद्रस्तथाग्रहीत् ॥ १९.१९२ ॥

ततः प्रवृत्ते समरे भैरवे तारकामये ।

देवानां रुद्रमुख्यानां वीरेण तुहिनात्विषा ॥ १९.१९३ ॥

अस्त्रं ब्रह्मशिरः स्पृ(सृ)ष्टं यशश्छेदि दिवौकसाम् ।

अल्पावशेषामकरोद्भग्नध्वस्तहतां चमूम् ॥ १९.१९४ ॥

त्रस्तैरथ सुरैरेत्य याचितः कमलोद्भवः ।

निर्वाय साम्ना समरं ददौ जायां बृहस्पतेः ॥ १९.१९५ ॥

सगर्भामागातामूचे स तामीर्ष्याविषोल्बणः ।

न धार्योऽयं त्वया गर्भो मद्योनावित्यधोमुखीम् ॥ १९.१९६ ॥

ततस्तत्याज सा गर्भमिषीकास्तम्भसंस्तरे ।

तेजसा जातमात्रोऽसौ विबुधानजयद्बुधः ॥ १९.१९७ ॥

पृष्टा ततोऽयं कस्येति देवैर्नोवाच सा यदा ।

तदा पृष्टा विरिञ्चेन चन्द्रस्येत्यवदल्लघु ॥ १९.१९८ ॥

स पुत्रः शशिनः श्रीमान्प्रतिकूलोदयो दिवि ।

शिशिरव्यजनो धीमान्बभौ विबुधनन्दनः ॥ १९.१९९ ॥

अथ कालेन शीतांशुर्दक्षिणाक्षीणमण्डलः ।

परदारपरामर्षात्तप्तोऽत्रिं शरणं ययौ ॥ १९.२०० ॥

स तेन पुत्रवात्सल्यान्मन्त्रैः क्षपितकिल्बिषः ।

रराज यक्ष्मणा मुक्तः पुनर्युक्तो निजश्रिया ॥ १९.२०१ ॥

▪ ▪ ▪ ▪ ▪ सोमोत्पत्तिः ॥ ५ ॥ *****

इडायामथ पुत्रोऽभूद्बुधस्य स पुरूरवाः ।

यस्याभूद्भूवनश्लाघ्या कान्ता कीर्तिरिवोर्वशी ॥ १९.२०२ ॥

तस्य षट्तनयास्तस्यामभवंस्त्रिदशालये ।

आयुर्ज्येष्ठो नृपस्तेषां नहुषोऽप्यायुषः सुतः ॥ १९.२०३ ॥

रजिप्रभृतयस्तस्य चत्वारोऽप्यनुजाः पुरा ।

देवासुररणे पूर्वं साहाय्ये वज्रपाणिना ॥ १९.२०४ ॥

रजिर्वृतः स्वराज्येन पणेन नहुषानुजः ।

स हत्वा दितिजान्वीरान्सुरेन्द्रत्वं पणार्जितम् ॥ १९.२०५ ॥

त्वत्पुत्रोऽस्मीति शक्रेण धूर्तेनाभिहितोऽत्यजत् ।

अथ कालेन जयिनो रजेः पुत्रा महौजसः ॥ १९.२०६ ॥

राज्यं त्रिदशराजस्य जह्रुः पितृबलार्जितम् ।

हृतराज्यः स शक्रोऽथ हृतभागः क्रतुष्वपि ॥ १९.२०७ ॥

ययाचे बदरीमात्रं पुरोडाशं बृहस्पतिम् ।

तेन बालमुखाब्जेन याचितो नष्टचेतसा ॥ १९.२०८ ॥

चकार रजिपुत्राणां मतिमोहं बृहस्पतिः ।

ततस्ते रागिणो मत्ता विभ्रष्टा न्यायवर्त्मनः ॥ १९.२०९ ॥

संवृत्ता भृशमुत्सेकान्नष्टवीर्यपराक्रमाः ।

तेन तान्दुर्जयान्हत्वा वज्री स्वपदमाप्तवान् ॥ १९.२१० ॥

शफरोत्फालचटुला दुर्वृत्तानां हि संपदः ।

नहुषस्याभवत्पुत्रो ययातिः पृथिवीपतिः ॥ १९.२११ ॥

दिव्येन यो रथाग्र्येण षड्रात्रेणाजयज्जगत् ।

योऽसौ कालेन तद्वंशे शापान्नष्टो रथोत्तमः ॥ १९.२१२ ॥

जरासंधेन संप्राप्तो हृतो योऽप्यसुरारिणा ।

ययातेः शुक्रकन्यायां देवयान्यां बभूवतुः ॥ १९.२१३ ॥

यदुश्चतुर्वसुश्चेति तनयौ संमतौ सताम् ।

वृषपर्वसुतायाश्च शर्मिष्ठायाः सुतास्त्रयः ॥ १९.२१४ ॥

द्रुह्यानुपूरुनामानस्तस्यासन्वंशवर्धनाः ।

कालेऽथ विपुले याते ययातिः प्रवयाः सुतान् ॥ १९.२१५ ॥

ययाचे यौवनं कामी जरया जगतीपतिः ।

मृत्युसिंहनखश्रेणीं सुखपद्महिमाहतिम् ॥ १९.२१६ ॥

यदा कश्चिन्न जग्राह जरां पुरुस्तदाग्रहीत् ।

तस्माद्यौवनमासाद्य यदुमुख्यानथो परान् ॥ १९.२१७ ॥

ययातिरशपद्वंश्या येनैषामनृपाः सदा ।

ततो दिदृक्षुः कामानां पारं तरुणविग्रहः ॥ १९.२१८ ॥

विश्वस्य नाककामिन्या नन्दने विजहार सः ।

सुचिरं सेवमानोऽपि राजा राजीवलोचनाम् ॥ १९.२१९ ॥

यदा प्रवर्धमानेच्छः कामानां नान्तमाययौ ।

तदा राज्यं सुतस्यैव पुरोर्दत्वा जरां निजाम् ॥ १९.२२० ॥

जग्राह जातवैराग्यो जगौ चेदं मुनिव्रतः ।

चित्रं भोगाभिलाषोऽयं भोगाभ्यासेन वर्धते ॥ १९.२२१ ॥

वेल्लत्कल्लोलजालेन सलिलेनेव वाडवः ।

बत विस्फारसंसारसरोरुहरजश्छटा ॥ १९.२२२ ॥

प्रीतिः प्रतिनिशं मुग्धान्बध्नाति मधुपानिव ।

जीर्यतामप्यजीर्योर्(णो)ऽयं नश्यतामपि नश्वरः ॥ १९.२२३ ॥

कामः कामवतामन्तर्घुणः क्षितिरुहामिव ।

निषिद्धो नियमेनापि धैर्येणाप्यवधीरितः ॥ १९.२२४ ॥

रागो ज्वलत्यहो वस्त्रेणाच्छादित इवानिलः ।

इति संचिन्त्य नियतो ययातिस्तपसा युतः ॥ १९.२२५ ॥

कुलोचितेन विधिना यशःशेषत्वमाययौ ।

पूरोर्ययातिपुत्रस्य वशे सुविपुले क्षितौ ॥ १९.२२६ ॥

प्रवर्तमाने बहुधा कालेनाभून्महीपतिः ।

दुष्यन्तो यस्य भरतः पुत्रो भारतवंशकृत् ॥ १९.२२७ ॥

अवदाते कुले यस्य जातोऽसि जनमेजयः ।

इत्येष पौरवो वंशः पूर्वमेव मयोदितः ॥ १९.२२८ ॥

▪ ▪ ▪ ▪ ▪ पूरुवंशः ॥ ६ ॥ *****

तुर्वसोस्तु महान्वंशो यस्मिञ्जातः करंधमः ।

मरुत्तस्तत्सुतो यस्मै ददौ हेम महेश्वरः ॥ १९.२२९ ॥

तस्यासन्विपुले वंशे पाण्ड्यचौलाः सकेरलाः ।

राजा मरुत्पतिर्नाम द्रुह्यवंशे त्वजायत ॥ १९.२३० ॥

कृच्छ्रेण दीर्घसंग्रामे यौवनाश्वेन यो हतः ।

गान्धारस्तत्सुतो यस्य वंशे जातास्तुरङ्गमाः ॥ १९.२३१ ॥

अनोस्तु वंशे धर्माद्या जाताः प्रत्यन्तभूमिपाः ।

यदोस्तु प्रसृते वंशे कृतवीर्यात्मजो नृपः ॥ १९.२३२ ॥

कार्तवीर्यार्जुनो जातः सहस्रभुजदुर्मदः ।

हेहयानर्तभोजाद्यस्तालजङ्घाश्च तत्कुले ॥ १९.२३३ ॥

कालेन जातस्तद्वंशे वृषो वृषसुतो मधुः ।

वृषणस्तत्सुतो यस्य वंशे सागरवृष्णयः ॥ १९.२३४ ॥

अन्धकोऽप्यन्वये तेषामभूदन्धकवंशकृत् ।

बहुशाखे च तद्वंशे जातो क्रूरः सहस्रदः ॥ १९.२३५ ॥

तत्पितृव्यकुले काले शूरः श्रीमानजायत ।

वसुदेवः सुतस्तस्य बभूवानकदुन्दुभिः ॥ १९.२३६ ॥

यस्मिञ्जाते दिवि महानभूद्दुन्दुभिनिःस्वनः ।

भ्रातास्य देवभागाख्यस्तथा देवश्रवाः परः ॥ १९.२३७ ॥

अनाधृष्टिः कनवको वत्सः श्यामो ववृञ्ज सः ।

पृथुकीर्तिः पृथाख्या च श्रुतदेवी श्रुतश्रवाः ॥ १९.२३८ ॥

राजाधिदेवी पञ्चैताः शूरपुत्र्योऽस्य चानुजाः ।

पृथुकीर्तिसुतो राजा दन्तवक्रो नृपात्मजः ॥ १९.२३९ ॥

पृथासुता धर्मराजभीमसेनधनंजयाः ।

श्रुतश्रवायास्तनयः शिशुपालो महाबलः ॥ १९.२४० ॥

दैत्यराजोऽभवद्योऽसौ हिरण्यकशिपुः पुरा ।

पितृव्यवंशे शूरस्य शैनेयः सत्यकोऽभवत् ॥ १९.२४१ ॥

सात्यकिस्तस्य तनयो युयुधानापराभिधः ।

उद्धवो विबुधाचार्यः शत्रुदेवमुखास्तथा ॥ १९.२४२ ॥

शत्रुदेवस्य नैषादिरेकलव्योऽभवत्कुले ।

वत्सावते त्वपुत्राय वसुदेवः प्रतापवान् ॥ १९.२४३ ॥

अद्भिर्ददौ सुतं वीरं शौरिः कौशिकमौरसम् ।

गण्डूषकायापुत्राय चारुदोष्णादिकान्हरिः ॥ १९.२४४ ॥

द्वे भार्ये वसुदेवस्य रोहिणी देवकी तथा ।

रोहिणीतनयो रामः सारणो दुर्दमः सुभः ॥ १९.२४५ ॥

शुभ्रपिण्डारदमनास्ते महावदनात्मजाः ।

अनुजा च सुभद्रैषा महिषी सव्यसाचिनः ॥ १९.२४६ ॥

रामस्य निषधो नाम रेवत्यामभवत्सुतः ।

देवकीनन्दनः कृष्णो देवो दानवसूदनः ॥ १९.२४७ ॥

वसुदेवस्य चान्यासु भार्यासु ह्यभवन्सुताः ।

भोजोपासङ्गविजया वृषदेवो गदस्तथा ॥ १९.२४८ ॥

आशावहो लोमपादः कपिलो वर्धमानकः ।

पौण्ड्रो निषादनाथश्चेत्युग्रवीर्यपराक्रमाः ॥ १९.२४९ ॥

अत्रान्तरे गार्ग्यमुनिर्धनु कालायसाशनः ।

चचार द्वादश समा ब्रह्मचारी परं तपः ॥ १९.२५० ॥

त्रिगर्तराजसुतया परीक्षायै सविभ्रमम् ।

न चचालायसप्रख्यो ह्रियमाणशयोऽपि यः ॥ १९.२५१ ॥

स मन्युतप्तो गोपालकन्यायां रुद्रशासनात् ।

असृजत्कालयवनं कालं सर्वमहीभुजाम् ॥ १९.२५२ ॥

रथे यस्य हया घोरा वृषपूर्वार्धविग्रहाः ।

गृहीतो यवनेन्द्रेण निष्पुत्रेण स पुत्रकः ॥ १९.२५३ ॥

युद्धार्थी दर्पसंमत्तः पप्रच्छ सुभटान्भुवि ।

नारदस्य गिरा ज्ञात्वा स वीरान्वृष्णियादवान् ॥ १९.२५४ ॥

मथुरानिलयाञ्जेतुमक्षौहिण्या समाद्रवत् ।

ते कालयवनाक्रान्ता जरासंधेन चार्दिताः ॥ १९.२५५ ॥

वृष्णयो मथुरां त्यक्त्वा द्वारकां चक्रुरम्बुधौ ।

वंशस्कन्धेषु चान्येषु संभूता यादवाः परे ॥ १९.२५६ ॥

सात्वतस्याभवद्दैवैरुद्गीतचरितः कुले ।

यज्वा देवावृधो राजा बभ्रुस्तस्यात्मजोऽभवत् ॥ १९.२५७ ॥

आपगायां सर्वर्णायां जातः कोटिसहस्रदः ।

संभूतास्तत्कुले वीरा भोजास्ते शान्तिकावताः ॥ १९.२५८ ॥

अन्धकात्कुक्कुरो जातस्तद्वंश्योऽप्याहुकोऽभवत् ।

प्रणेता वृष्णिवंशानां राजा कृतयुगोचितः ॥ १९.२५९ ॥

देवकश्चोग्रसेनश्च तत्सुतौ देवकस्य तु ।

देववत्प्रमुकाः पुत्रा देवक्याद्यश्च कन्यकाः ॥ १९.२६० ॥

याः सप्त वसुदेवाय वितीर्णा वीरमातरः ।

उग्रसेनसुतः कंसो न्यग्रोधप्रमुखाग्रजः ॥ १९.२६१ ॥

कंसा कंसवती तन्वी पाली कह्वा च कन्यकाः ।

विदूरथकुले भोजे बभूव हृदिकाभिधः ॥ १९.२६२ ॥

कृतवर्ममुखास्तस्य शतधन्वादयः सुताः ।

क्रोष्टोर्वंशे प्रसेनोऽभूत्सत्राजित्सेनजित्तथा ।

इत्येते बहवो वंशा विश्रुता यादवा यदोः ॥ १९.२६३ ॥

अब्धेस्तटे द्वारवत्यां निवेशे विषदं मणिम् ।

दिव्यं स्यमन्तकं नाम प्रसेनः किल लब्धवान् ॥ १९.२६४ ॥

स मणिः कनकस्यन्दी व्यायिदुर्भिक्षनाशनः ।

शक्तेनाप्युत्सुकेनापि न हृतस्तस्य शौरिणा ॥ १९.२६५ ॥

कालेन मृगयासक्तः प्रसेनो मणिभूषितः ।

सिंहेन निहतो युद्धे सहसा मणिहारिणा ॥ १९.२६६ ॥

यान्तं जवेन तं सिंहमृक्षराजोऽथ जाम्वान् ।

निहत्य मणिमादाय बलवान्बिलमाविशत् ॥ १९.२६७ ॥

वृष्ण्यन्धकहतं दृष्ट्वा प्रसेनं विजने वने ।

मणिलोभात्कृतं सर्वं कृष्णेनेति शशङ्किरे ॥ १९.२६८ ॥

विशुद्धभावः कृष्णोऽपि तमन्वेष्टुं ययौ मणिम् ।

मिथ्याकलङ्कं यशसामपवादं सहेत कः ॥ १९.२६९ ॥

सास्रं प्रसेनमालोक्य स सिंहेत विदारितम् ।

तस्याविदूरे सिंहं च ददर्श विनिपातितम् ॥ १९.२७० ॥

मणेरलाभे विज्ञाय पदवीमृक्षशंसिनीम् ।

गुहां प्रविश्य गम्भीरं ददर्श विपुलं बिलम् ॥ १९.२७१ ॥

तत्र धात्र्या स शुश्राव वचनं बालसान्त्वने ।

तवैवासौ मणिः पुत्र मा रोदीः सुकुमारक ॥ १९.२७२ ॥

श्रुत्वेति ज्ञातवृत्तान्तो जाम्बवन्तं ददर्श सः ।

तेनाथ युयुधे कृष्णो दिवसानेकविंशतिम् ॥ १९.२७३ ॥

दशग्रीवोग्रसंग्रामशस्त्रोल्लिखितवक्षसम् ।

जाम्बवन्तं विजित्याथ दत्तां तेन सुतां हरिः ॥ १९.२७४ ॥

बिम्बाधरां जाम्बवतीं लेभे तं च स्यमन्तकम् ।

ततो द्वारवतीमेत्य स्यमन्तकमुदारधीः ॥ १९.२७५ ॥

स प्रसेनानुजायैव ददौ सत्त्रजिते मणिम् ।

सत्यभामामुखास्तिस्रः सत्राजिन्मुरवैरिणः ॥ १९.२७६ ॥

प्रददौ कन्यकाः कामकुमुदाकारचन्द्रिकाः ।

सत्राजितं घातयित्वा भोजेन शतधन्वना ॥ १९.२७७ ॥

अहरन्मणिमक्रूरो मिथः साहाय्यसंविदा ।

सत्यभामा स्वयं गत्वा हते पितरि दुःखिता ॥ १९.२७८ ॥

जतुवेश्मनि दग्धेषु पार्थेषु धृतराष्ट्रजैः ।

शार्ङ्गधन्वानमासाद्य वारणावतवासिनम् ॥ १९.२७९ ॥

हतं न्यवेदयत्साश्रुः पितरं शतधन्वना ।

ततस्तूर्णं समभ्येत्य द्वारकां गरुडध्वजः ॥ १९.२८० ॥

रामेण सहिति गत्वा युयुधे शतधन्वना ।

चक्रे मणिप्रदस्यापि नाक्रूरोऽस्य सहायताम् ॥ १९.२८१ ॥

स्वार्थकाले व्यतीते हि धूर्ता नो कस्यचिन्निजाः ।

अधिरुह्याशु वडवां शतयोजनगामिनीम् ॥ १९.२८२ ॥

विद्रुतं शतधन्वानं मिथिलाभिमुखं जवात् ।

जघान कैटभारातिर्नाससाद च तं मणिम् ॥ १९.२८३ ॥

सोऽपह्नुतो मणिरिति क्रुद्धोऽस्मै लाङ्गली मृषा ।

न द्वारकां विशामीति मिथिलां विमुखो ययौ ॥ १९.२८४ ॥

तत्र दुर्योधनस्तस्माद्गदाशिक्षामवाप्तवान् ।

ततः कृष्णानुगैरेत्य वृष्णिवीरैः प्रसादितः ॥ १९.२८५ ॥

द्वारकामाययौ श्रीमाञ्ज्ञाततत्त्वो हलायुधः ।

अक्रूरोऽपि मणिस्फीतो बहुयज्ञो बहुप्रदः ॥ १९.२८६ ॥

सुखं निनाय षष्ट्यब्दीं दीक्षाकवचरक्षितः ।

व्यक्तिं याते मणौ किंचिद्भीते रामत्सकेशवात् ॥ १९.२८७ ॥

अपयाते ततोऽक्रूरे नावर्षत्पाकशासनः ।

ज्ञातिभेदभयात्पूर्वं कृष्णेनोपेक्षितश्चिरम् ॥ १९.२८८ ॥

प्रसाद्य पनरानीतो दुर्भिक्षार्तैः सयादवैः ।

तस्मिन्दानपतौ प्राप्ते ववर्ष त्रिदिवेश्वरः ॥ १९.२८९ ॥

कालेन याचितः साम्ना कृष्णेन स ददौ मणिम् ।

तस्मै स्वसारं चाक्रूरः प्रीतये चारुलोचनाम् ॥ १९.२९० ॥

विनयार्जवतुष्टस्तं केशवोऽपि मणिं ददौ ।

अक्रूरायैव महतां प्रणयान्तो हि दुर्ग्रहः ॥ १९.२९१ ॥

- - - - - स्यमन्तकालम्भः ॥ ८ ॥ *****

कुलावलीं यादवानां निशम्य जनमेजयः ।

विस्मितो जन्मना विष्णोर्वैशम्पायनमब्रवीत् ॥ १९.२९२ ॥

अहो नु महदाश्चर्यमपूर्वं प्रतिभाति मे ।

कथं जगन्निवासोऽभूच्चराचरगुरुर्नरः ॥ १९.२९३ ॥

यत्कुक्षिकोटरे शेते कल्पान्ते भुवनावली ।

सकथं मानुषीगर्भं प्रपेदे भूतभावनः ॥ १९.२९४ ॥

वैश्वरूप्यमिदं यस्य सर्वभूतान्तरात्मनः ।

इच्छामात्रसमुन्मेषदर्पणे प्रतिबिम्बितम् ॥ १९.२९५ ॥

इति पृष्टः क्षितिभुजा जगाद मुदितो मुनिः ।

श्रूयतामद्भुतं जन्म विष्णोर्जन्मभयच्छिदः ॥ १९.२९६ ॥

येन यज्ञवराहेण वेदयज्ञमयं वपुः ।

कृत्वोद्धृता वसुमती चतुर्णवमेखला ॥ १९.२९७ ॥

बभौ कुवलयश्यामा दंष्टाग्रे यस्य मेदिनी ।

बालशेवलवल्लीव लीना पल्वलकेलिषु ॥ १९.२९८ ॥

येन केसरिणा शङ्खशुभ्राभिर्नखशुक्तिभिः ।

आयुषा सह निष्पीतं हिरण्यकशिपोर्यशः ॥ १९.२९९ ॥

उरःस्थलास्थिनिर्घर्षान्नखक्रकचपञ्जरे ।

यस्य दैत्यवधे कोपः प्राप कल्पाग्निकेतुताम् ॥ १९.३०० ॥

त्रैलोक्यक्रमणे यस्य विजयध्वजतां ययौ ।

पादो गङ्गाजलोल्लासव्यालोलधवलांशुकः ॥ १९.३०१ ॥

खर्वः पूर्वमथ प्रांशुरप्रमेयस्ततोऽभवत् ।

यश्च हर्षश्च देवानां मोहश्च त्रिदशद्विषाम् ॥ १९.३०२ ॥

यस्य कुण्डलतां कर्णे रविर्नाभौ सरोजताम् ।

प्राप प्रवर्धमानस्य गुल्फे कटकरत्नताम् ॥ १९.३०३ ॥

उच्चैर्विलोकयन्तीनां तद्वपुः सुरयोषिताम् ।

वलिविध्वंसभीत्येव नादृश्यत वलित्रयम् ॥ १९.३०४ ॥

दत्तात्रेयावतारेण धर्माचारस्य मज्जतः ।

वेदानां च कृतं येन स्थित्यै हस्तावलम्बनम् ॥ १९.३०५ ॥

जामदग्न्यवपुर्भूत्वा कार्तवीर्यस्य कर्मठम् ।

मृणालमण्डलीलावं दोःसहस्रं लुलाव यः ॥ १९.३०६ ॥

यः कुठारेऽस्थिनिष्पेषखण्डना दन्तमालिकाम् ।

क्षत्रियक्षयकालानां बभार गणनामिव ॥ १९.३०७ ॥

यः पूर्वाङ्गवतीं चारुमध्यदेशां पयस्विनीम् ।

सपुण्ड्रकाननां प्रादात्सवत्सां कश्यपाय गाम् ॥ १९.३०८ ॥

योऽभवद्भुवनाभोगभूषणं रघुनन्दनः ।

वीरः सुबाहमारीचघोरमेघमहानिलः ॥ १९.३०९ ॥

भ्रान्तः सप्तसु लोकेषु सप्ताब्धिक्षोभसंभृतः ।

सप्ततालभिदो यस्य धन्विनो धनुषध्वनिः ॥ १९.३१० ॥

अद्यापि सेतुसंघट्टविस्फुटच्छुक्तिसंपुटः ।

सुव्यक्तमुक्तादशनो वक्ति यस्याम्बुधिर्यशः ॥ १९.३११ ॥

किरीटकोटिविश्रान्तं येन शुभ्रयशोंशुकैः ।

उन्मृष्टं लोकपालानामिन्द्रिजित्सैन्यजं रजः ॥ १९.३१२ ॥

पतितोत्पतितैर्यस्य दशास्यवदनैर्मुहुः ।

बभूव कन्दुकामन्दविनोदानन्दविभ्रमः ॥ १९.३१३ ॥

भुवो भारावताराय कृष्णो वृष्णिकुलेऽभवत् ।

शिशुपालादिभूपालकालः शकलितासुरः ॥ १९.३१४ ॥

यद्वक्षसि ग्रावभिदः शृङ्गभङ्गपराभवः ।

असक्तिविषमोल्लेखैररिष्टस्याप्यसूच्यत ॥ १९.३१५ ॥

चक्रे यश्चरणः शुभ्रैर्मूर्ध्नि कालियभोगिनः ।

नखकान्तिफणाचक्रैः शेषस्पर्धधिरोहणम् ॥ १९.३१६ ॥

मूलास्थिच्छेदनिष्पेषजातज्वालाजटाजुषा ।

बाणबाहुवने यस्य चक्रेण क्रकचायितम् ॥ १९.३१७ ॥

कर्की(ल्की) विष्णुयशा यश्च भविष्यति ययुगक्षये ।

सत्त्वधर्मलतोद्याननवसौरभमाधवः ॥ १९.३१८ ॥

तस्याश्चर्यप्रभावस्य श्रूयतामिदमुज्ज्वलम् ।

चरितं पुण्यपीयूषैः किल्बिषक्षालनक्षमम् ॥ १९.३१९ ॥

प्रभावं तस्य तत्त्वेन वक्तुं को नु प्रगल्भते ।

यत्र वाचस्पतिर्मूको दूरे भोगिपतेर्गिरः ॥ १९.३२० ॥

▪ ▪ ▪ ▪ ▪ प्रादुर्भावसंग्रहः ॥ ९ ॥ *****

वृत्ते वृत्रवधे पूर्वं संग्रामे तारकामये ।

त्रिदशाः शरणं जग्मुर्विश्वक्सेनं जनार्दनम् ॥ १९.३२१ ॥

दत्तं तेनाभयं तेषां विषमे दैत्यजे भये ।

संहता दानवाः सर्वे विविशुः समराङ्गनम् ॥ १९.३२२ ॥

मयो मायानिधिस्तेषामग्रणीरुग्रविग्रहः ।

बभौ हैमं समारूढो रथमृक्षसहस्रगम् ॥ १९.३२३ ॥

तारः क्रोशाधिकायाममायसं रथमास्थितः ।

युक्तं स्वरसहस्रेण धूमोत्थोऽग्निरिवाबभौ ॥ १९.३२४ ॥

हयग्रीवः समारुह्य रथं हयसहस्रगम् ।

मत्तकुञ्जरयुक्तं च त्वष्टा मन्दरगौरवम् ॥ १९.३२५ ॥

वीरा विरोचनाद्याश्च तस्थुः समरसंमुखाः ।

कल्पान्तजलदब्यूहविपुलं तद्बलार्णवम् ॥ १९.३२६ ॥

विष्णुना विहिताश्वासा वीक्ष्य देवाः समाद्रवन् ।

ऐरावणगतस्तेषां सहस्राक्षः पुरो बभौ ॥ १९.३२७ ॥

इन्द्रायुधसहस्राणि दर्शयन्वज्ररश्मिभिः ।

यमस्तारमहाहारः श्यामो महिषवाहनः ॥ १९.३२८ ॥

तस्थौ लम्बाम्बुदो नीलशैलो निर्झरवानिव ।

श्वेताश्वो मणिमालाङ्को वरुणस्तरणिप्रभः ॥ १९.३२९ ॥

रथे रराज कैलासे रत्नकूट इवोद्गतः ।

हेमकर्मा हेमरथो हेमाङ्गदाधरः ॥ १९.३३० ॥

जहार धनदो मेरोः सूर्यातपजुषः श्रियम् ।

हिमरश्मिर्हिमशिलाशुभ्राश्वस्तुहिनायुधः ॥ १९.३३१ ॥

तस्थौ जलदवाहश्च वायुरायुः शरीरिणाम् ।

देवश्च स्वयमभ्यायाद्भगवान्कैटभान्तकः ॥ १९.३३२ ॥

दीप्तचक्रगदाशार्ङ्गनन्दनो गरुडध्वजः ।

चक्रं रराज तस्याजौ धाराबिम्बितदानवम् ॥ १९.३३३ ॥

अन्तःप्रविष्टनिहताराातिव्रातमिवाभितः ।

प्रशान्ते ज्वलिते मेरुरिवास्य भुजगान्तकः ॥ १९.३३४ ॥

बभासे भास्वरो वाहः प्रवाहः शत्रुतेजसाम् ।

तस्य दीप्ततरैः पक्षैर्बभूव पिहितं नभः ॥ १९.३३५ ॥

अन्त्यैर्द्वादशभिः सूर्यैरिवैकघनतां गतैः ।

विरराज तदारूढो हरिः कौस्तुभभूषितः ॥ १९.३३६ ॥

वडवानलसंयुक्तो मैनाक इव रत्नसूः ।

रुद्रादित्यमरुद्विश्वसाध्याश्विवसुचारणाः ॥ १९.३३७ ॥

उद्ययुः क्षुब्धसैन्याब्धेः कल्लोला इव संगताः ।

अथोद्धूताम्बुधिध्वानडजीकृतजगत्त्रयः ॥ १९.३३८ ॥

ररास घोषगम्भीरः समराम्भदुन्दुभिः ।

पेतुः परस्परं तेषां देहे तेजस्विनां प्रभाः ॥ १९.३३९ ॥

प्रवृत्ते समरे हेमनाराचनिचया इव ।

सुरासुरकरोत्सृष्टशस्त्रास्त्रनिकपोत्थिताः ॥ १९.३४० ॥

ज्वालाश्चक्रुर्ध्वजाग्रेषु क्षणं पीतांशुकभ्रमम् ।

चेरुस्त्रिदशमातङ्गदन्तोल्लिखितकङ्कटाः ॥ १९.३४१ ॥

जातधूमानला दैत्या मेघा इव सविद्युतः ।

तेषां वक्षस्तटे भुग्नदन्तास्ते दिव्यकुञ्जराः ॥ १९.३४२ ॥

सिकतासेतुनिःसारानमन्यन्त कुलाचलान् ।

ततो दैत्यभुजोद्धूतशस्त्रनिर्विविरा दिवि ॥ १९.३४३ ॥

बभूवुर्निश्चलाः क्षिप्रं चित्रन्यस्ता इवामराः ।

इयमत्यन्तदुर्वारा दैत्यमाया महीयसी ॥ १९.३४४ ॥

यमोऽवि नियमेनेव बद्धस्तन्निधनेषु यत् ।

वायुः पङ्गुरिव क्षिप्रमप्रकाश इवांशुमान् ॥ १९.३४५ ॥

जयस्तु युधि दैत्येषु वह्निः शीत इवाभवत् ।

ततः सहस्रनयनो वज्रेणोन्म्य दैत्यजाम् ॥ १९.३४६ ॥

मायां मयमुखान्वीरान्सुरैः पुनरयोधयत् ।

वज्रिवज्रनिकृत्तानां दैत्यानां पततां भुवि ॥ १९.३४७ ॥

गुरुभिर्विग्रहैः प्रापुरैक्यं सप्तापि तेऽब्धयः ।

ते गजेन्द्र इवालिप्ता दानवा दानवारिभिः ॥ १९.३४८ ॥

तमोभिरावृताः पेतुः सुरेन्द्रेम विमोहिताः ।

बहुमायस्ततो मायां मयः समयवर्तिनीम् ॥ १९.३४९ ॥

प्रमयायैव देवानामौर्वानलवतीं व्यधात् ।

ऊरुजस्तनयो वह्नेः संकल्पाद्ब्रह्मचारिणः ॥ १९.३५० ॥

लोकान्दिधक्षुः कालात्मा वार्भक्षो ब्रह्मणो वरात् ।

हिरण्यकशिपोः पूर्वमौर्वो भक्त्या वरप्रदः ॥ १९.३५१ ॥

जज्वाल सुरेसनासु तस्मिन्समरसंकटे ।

और्वेण दह्यमानास्ते ज्वालाजटिलविग्रहाः ॥ १९.३५२ ॥

एकीभूतान्यमन्यन्त तेजांसि च तमांसि च ।

विवशास्त्रिदशाः सर्वे तेनौर्वानलपर्वणा ॥ १९.३५३ ॥

वरुणं शीतरश्मिं च त्राणमेव व्यचिन्तयन् ।

अथाखण्डलनिर्दिष्टश्चन्द्रमा वरुणाग्रगः ॥ १९.३५४ ॥

क्षिपन्हिमशिलासंघानुद्ययौ युधि दानवान् ।

तुषारवारिपूरैस्ते भृशं ताभ्यां समाहताः ॥ १९.३५५ ॥

निश्चेष्टा दानवाः प्रापुः काष्ठपाषाणतुल्यताम् ।

हिमस्य महती शक्तिः सा कापि दहनात्मिका ॥ १९.३५६ ॥

यया दानवसंघानामस्थिभङ्गो महानभूत् ।

तुषाराशनिसंछन्ना दानवानामनीकिनी ॥ १९.३५७ ॥

नासानिःश्वासविवरैर्निर्विभागमसूच्यत ।

मायाविनिमयं ज्ञात्वा मयः स्वजनसिद्धये ॥ १९.३५८ ॥

असृजत्पार्वतीं मायां द्रुमशस्त्रशिलाघनाम् ।

द्रुमशैलनिरुद्धानां स्फुटितायुधवर्मणाम् ॥ १९.३५९ ॥

मोहो जजृम्भे देवानामृते चक्रगदाधरम् ।

ततः क्षणात्तदादिष्टौ तदनु पाणितौजसा ॥ १९.३६० ॥

समं विविशतुः सेनां दैत्यानामग्निमारुतौ ।

भस्मकूटावलीशेषान्कृत्वा द्रुमशिलोच्चयान् ॥ १९.३६१ ॥

उद्धूतान्दिक्षु विक्षिप्य तौ रणाग्रे विचेरतुः ।

अनिलोल्लासितज्वालाज्वलितश्मश्रुभीषणः ॥ १९.३६२ ॥

दैत्यानां दह्यमानानां धूमः काल इवोद्ययौ ।

मारुतस्याग्नितप्तस्य वह्नेतोद्यतस्य च ॥ १९.३६३ ॥

अभूत्कृतान्तहुंकारघोरः कहकहारवः ।

विचटच्चर्मणामेषं छमच्छमिति मेदसाम् ॥ १९.३६४ ॥

स्फुटस्स्थूलास्थिबन्धानां कोऽपि व्यतिकरोऽभवत् ।

जयत्सु सुरसङ्घेषु भङ्गे दितिजमण्डले ॥ १९.३६५ ॥

कालनेमिः समुत्तस्थौ त्रिजगद्ग्रसलालसः ।

जृम्भाविस्पष्टदंष्ट्राग्रैरुग्रवक्त्रैर्भृताम्बरः ॥ १९.३६६ ॥

जगत्क्षयायेव रसादहंपूर्विकयोत्थितैः ।

तस्याञ्जनशिलास्तम्भसंभारैर्भुजमण्डलैः ॥ १९.३६७ ॥

अभवन्ककुभो भीमबोगिभोगवृता इव ।

विटङ्कमुकुटप्राप्तघृष्टब्रह्माण्डकर्परे ॥ १९.३६८ ॥

असृजद्धूमजालेन क्षयजीमूतडम्बरान् ।

शतवक्त्रस्य नेत्रेभ्यस्तस्य ज्वाला दिशो ययुः ॥ १९.३६९ ॥

तच्छायया जगत्सर्वमदृश्यमभवत्क्षणात् ।

अघोरैः कालरजनीसङ्घैः संघट्टितैरिव ॥ १९.३७० ॥

तस्य विश्वक्षयाक्षेपदीक्षासमयमण्डलैः ।

दीप्तायुप्रभाचक्रैरालोकः ककुभामभूत् ॥ १९.३७१ ॥

घट्टयन्सर्वतेजांसि सर्वभूतानि कम्पयन् ।

जहार जलदव्यूहान्कोपनिःश्वासमारुतैः ॥ १९.३७२ ॥

उद्यम्य पवनास्कन्धसंघट्टोद्घट्टनं भुजम् ।

अजीववत्स दितिजान्क्षुब्धाब्धिध्वानया गिरा ॥ १९.३७३ ॥

उदायुधैः प्रमुदितैर्दानवैस्तत्पुरः सरैः ।

ततो युयुधिरे देवाः कालनेमिहतौजसः ॥ १९.३७४ ॥

तस्मिन्समरसंघट्टे तुमुले प्राणहारिणि ।

व्यवर्धत महान्कायः करालः कालनेमिनः ॥ १९.३७५ ॥

तद्वक्त्रकुहरोद्वान्तज्वालावलयिताः सुराः ।

तिर्यगूर्ध्वं प्रवृद्धैश्च तद्भुजैरभितो हताः ॥ १९.३७६ ॥

तच्छस्त्रवृष्टिदलितास्तत्कराकृष्टमौलयः ।

पेतुर्भ्रष्टा विमानेभ्यः क्षीणपुण्या इव क्षितौ ॥ १९.३७७ ॥

भग्ने वक्रमुखे शक्रे वरुणे करुणास्पदे ।

धनदे निधनापन्ने शशाङ्के ग्रासशङ्किते ॥ १९.३७८ ॥

भग्नायुधध्वजच्छत्रा छिन्नस्यन्दनकुञ्जराः ।

निश्चेष्टास्त्रिदशास्तस्थुर्दिनदीपा इवाप्रभाः ॥ १९.३७९ ॥

शीतस्य वह्ने का वार्ता तरणिस्तारदर्पणः ।

आस्था किं निश्चले वायौ किं यमेन हतौजसा ॥ १९.३८० ॥

किमेते मुद्रिता रुद्रा वसवो व्यसवो नु किम् ।

इति ब्रुवाणा नादेन ननन्दुर्दितिनन्दनाः ॥ १९.३८१ ॥

ततः संप्राप्तविजयः कालनेमिः क्षतामरः ।

लोकपालपदे तस्थौ विभज्यानेकधा वपुः ॥ १९.३८२ ॥

जलं भूत्वाभवद्व्यापी वायुर्भूत्वा ववौ स्वयम् ।

सोमसूर्यतनुर्भूत्वा रात्र्यहानि चकार सः ॥ १९.३८३ ॥

जग्राह सर्वलोकात्मा हव्यमग्निमुखः स्वयम् ।

सर्वदेवमयः सोऽभूदिति विष्णुजिगीषया ॥ १९.३८४ ॥

समस्तभुवनाधीशः सर्वदेवगणैर्युतः ।

वेदधर्मकृपासत्यैः श्रिया च न समाश्रितः ॥ १९.३८५ ॥

स ददर्शाथ देवादिं देवं गरुडलाञ्छनम् ।

उपेक्षिताग्रसंमर्दं रणकौतुकलीलया ॥ १९.३८६ ॥

प्रभादामाभिरामेण कौस्तुभेन विभूषितम् ।

स्फुरदिन्द्रायुधोदारं स्निग्धश्याममिवाम्बुदम् ॥ १९.३८७ ॥

भुजैर्विभ्राजितं रत्नकेयूरधृतिपल्लवैः ।

हारकान्तिसुधासिक्तैः पारिजातैरिवापरैः ॥ १९.३८८ ॥

उह्यमानं सुपर्णेन सुवर्णच्छविहारिणा ।

मन्दरोद्धारभीतेन मूर्तेनेव सुमेरुणा ॥ १९.३८९ ॥

दैत्यसंहारगणनाचिह्नहेमाङ्गदां गदाम् ।

धारयन्तं गिरीन्द्राणां गौरवैरिव निर्मिताम् ॥ १९.३९० ॥

अरुणैरूरुयुगले रत्नसूर्यांशुभिर्वृतम् ।

मधुकैटभकण्ठासृक्छटाभिरिव चर्चितम् ॥ १९.३९१ ॥

शङ्खकान्तिवितानेन रत्नमालातरङ्गिणा ।

क्षीरोदेनेव शयनायासत्रस्तेन सेवितम् ॥ १९.३९२ ॥

राहुकण्ठाटवीछेदप्रोच्छलच्छोणितारुणैः ।

व्याप्तं चक्रप्रभाचक्रैः सूर्यांशुभिरिवाम्बरम् ॥ १९.३९३ ॥

अहो बतायमस्माकं शत्रुर्लोचनगोचरः ।

निरञ्जनदशां येन नीता दैत्यवधूदृशः ॥ १९.३९४ ॥

घ्नता हिरण्यकशिपुं सुतारैर्नखराङ्कुरैः ।

हन्ता हतान्यनेनैव मुक्ताभानि यशांसि नः ॥ १९.३९५ ॥

नृसिंहचरणाक्रान्तिरजोदिग्धां सभाभुवम् ।

हत्वेमं क्षालयाम्येष दैत्यहर्षाश्रुवारिभिः ॥ १९.३९६ ॥

इति ब्रुवाणं सावज्ञं लीलास्मितसिताधरः ।

पातिना दर्पमधुना मत्तोऽस्मीत्यभ्यधाद्विभुः ॥ १९.३९७ ॥

घोराट्टहासविकटो दानवाधिपतिस्ततः ।

अपातयच्छस्त्रवृष्टिं देवोरसि भुजैर्घनैः ॥ १९.३९८ ॥

अकम्प्यत सुपर्णोऽपि गदया चण्डवेगया ।

देवोरसि भुजैर्येन निष्कम्पोऽकम्पत क्षणम् ॥ १९.३९९ ॥

विस्मितः कोपसंरम्बादथ विष्णुर्व्यवर्धत ।

सहस्रबाहुचरणः सहस्रवदनेक्षमः ॥ १९.४०० ॥

स सुदर्शनमासाद्य विषदं भयदं द्विषाम् ।

पर्यन्ततेजःप्रसरैः किरत्काञ्चनावालुकम् ॥ १९.४०१ ॥

दैत्यास्थिकूटकुण्ठाकं क्षुराग्रं वज्रमण्डलम् ।

चिक्षेप क्रकचक्रूरं दानवाननकानने ॥ १९.४०२ ॥

तद्विष्णुभुजनिर्मुक्तं प्रतिमानं विवस्वतः ।

चकर्ताग्निशिखोद्गारं घोरं वक्त्रशतं द्विषः ॥ १९.४०३ ॥

निकृत्तभुजवक्त्रोत्थसरद्रुधिरनिर्झरः ।

न पपात चिरं दैत्यो मन्युस्तब्ध इव स्थितः ॥ १९.४०४ ॥

पक्षवातेन तार्क्ष्यस्य क्षुण्णक्ष्माधरमौलिना ।

सप्ताब्धयः समुत्पेतुस्तरङ्गालिङ्गिताम्बराः ॥ १९.४०५ ॥

सर्वतः पाणिपादेन सर्वे सर्वत्र दानवाः ।

पीडिता विश्वरूपेण प्रययुः स्मृतिशेषताम् ॥ १९.४०६ ॥

▪ ▪ ▪ ▪ ▪ कालनेमिवधः ॥ १० ॥ *****

ततो निवृत्ते दुर्वृत्ते प्रवृत्ते धर्मकर्मणि ।

ब्रह्मप्रभृतिभिर्देवैः स्तूयमानो महर्षिभिः ॥ १९.४०७ ॥

स्वपदे शक्रमादाय ब्रह्मसद्म ययौ हरिः ।

वन्दितस्त्रिजगद्वन्द्यैः सिद्धैः संविन्मयात्मभिः ॥ १९.४०८ ॥

ततो निजाश्रमं गत्वा स्वप्रभोद्भासितं विभुः ।

भेजेऽम्बुधौ योगानिद्रामदभ्राभ्रोत्तरच्छदे ॥ १९.४०९ ॥

तं शेषशायिनं कृष्णं सहस्रवदनं शनैः ।

निद्रा सिषेवे मत्तालिमालेव कमलाकरम् ॥ १९.४१० ॥

तस्य पीतांशुकोदारं सुप्तस्य विबभौ वपुः ।

नाभेब्रह्मसरोजोत्थरजः पुञ्जैरिवाचितम् ॥ १९.४११ ॥

कलयन्नक्षसूत्रेण लौकिकीं कालकल्मषाम् ।

प्रजाः श्वासावलीसूत्रैः संजहारोत्ससर्ज च ॥ १९.४१२ ॥

तस्मिन्प्रसुप्ते विधिना दक्षैणायनकारिणा ।

निद्रापि निद्रयेवाभूत्तमःपटलमीलिता ॥ १९.४१३ ॥

जृम्बालस्यविमोहाङ्का नृणां जीवार्थहारिणी ।

अदीर्घप्रलये सेयं पावनी विष्णुसंगमात् ॥ १९.४१४ ॥

ततो वर्षसहस्रेषु यातेषु च कृते कते ।

त्रेतायां विनिवृत्तायां द्वापरे तनुतां गते ॥ १९.४१५ ॥

कमलाकेलिकमलप्रान्तवातविबोधितम् ।

पितामहमुखा देवाः सहस्राक्षपुराःसराः ॥ १९.४१६ ॥

एकीभूताः समभ्येत्य जगत्कार्यार्थमुद्यताः ।

तं तुष्टुवुर्मुनिगणाः फुल्लपद्मकराः क्षणम् ॥ १९.४१७ ॥

योगनिद्रापदेशेन गर्भीकृतजगत्त्रये ।

त्वयि देव न जानीमः कर्त्वयं सुप्तसंविदा ॥ १९.४१८ ॥

त्रैलोक्यकर्मणां मुद्रां निद्रां नेत्राब्जषट्पदीम् ।

त्यज भोगपरिम्लानामिव नीलोत्पलस्रजम् ॥ १९.४१९ ॥

स्फारेण दक्षिणेनाक्ष्णा जन्मक्षेत्रेण भास्वतः ।

जगन्ति कमलानीव विकासय जगत्पते ॥ १९.४२० ॥

सव्येनेन्दूदयानन्दविष्यन्दामृतवर्षिणा ।

भूतानि सर्वभूतात्मन्कुमुदानीव जीवय ॥ १९.४२१ ॥

देव देवाः प्रतीक्षन्ते त्वत्प्रसादावलोकनम् ।

विज्ञप्तिः श्रूयतामेषा जगतां कार्यगौरवात् ॥ १९.४२२ ॥

श्रुत्वेति देवर्षिवचो निद्राविषदलोचनः ।

पार्श्वे वलितहारार्धविश्रान्तिकृतमण्डलः ॥ १९.४२३ ॥

आवृत्तकंधरो देवानवदद्दशनांशुभिः ।

कुर्वन्वदनपद्मानां मृणालीकाण्डमण्डलम् ॥ १९.४२४ ॥

किमयं लोकपालानां मन्त्रशंसी समागमः ।

अपि नाम न दैत्येन्द्रैः क्रान्तास्त्रिदशभूमयः ॥ १९.४२५ ॥

फुल्लाब्जपुञ्जजयिनी किरणाङ्कुरकेसरा ।

इयं वो वदनच्छाया न शंसति पराभवम् ॥ १९.४२६ ॥

अयं च स्वयमायातः पद्मजन्मा पितामहः ।

हितं च जगतां कार्यं नाल्पमेतद्भविष्यति ॥ १९.४२७ ॥

सज्जोऽहं भवतामर्थे कर्तव्यमधुनोच्यताम् ।

इति वादिनि देवेशे बभाषे चतुराननः ॥ १९.४२८ ॥

सर्वं त्वमेव सर्वात्सञ्जानीषे कार्यमात्मना ।

प्रश्नाज्ञाः किंतु भवतः परेण न विलङ्घ्यते ॥ १९.४२९ ॥

सहस्रशीर्षः शेषोऽयं वक्तुं जानाति ते स्तुतिम् ।

तवैव भारती देवी यदि वैषा सरस्वती ॥ १९.४३० ॥

त्वच्चक्रक्रकरोत्कृत्तदैत्योग्रविषपादपे ।

धर्मस्यति जगत्यस्मिन्नभग्नप्रणयो रथः ॥ १९.४३१ ॥

विवृद्धः सर्वभूपालाः सदाचारानुवर्तिनः ।

प्रभूतबलसंभारैर्भारः किंतु महान्क्षितेः ॥ १९.४३२ ॥

सेयं महीयसी चिन्ता महीमञ्जनशङ्कया ।

सद्वृत्तानां नरेन्द्राणां क्षये यदयमुद्यमः ॥ १९.४३३ ॥

प्रजापतेरिति वचः श्रुत्वा देवः प्रजाहितम् ।

तथेत्युक्त्वा ययौ सार्धं त्रिदशैरमरावतीम् ॥ १९.४३४ ॥

तां कल्पपादपवतीं रत्नमन्दिरसुन्दराम् ।

प्रविश्य भेजे प्रोद्भूतरत्नस्तम्भप्रभां समभाम् ॥ १९.४३५ ॥

चन्द्रकान्तासने तत्र क्षीरार्णव इवापरे ।

स्तिते विष्णौ सुराः प्रापुर्हेमरत्नासनान्यथ ॥ १९.४३६ ॥

ब्रह्मवाक्यात्प्रतीहारे वेत्रपाणौ समीरणे ।

निवातसुप्तदुग्धाब्धिनिःशब्दमभवत्सदः ॥ १९.४३७ ॥

ततस्तं सूचिताभिख्या स्वयं तामरसौकसा ।

पादपीठे पुरो विष्णोरुपविश्यानतानना ॥ १९.४३८ ॥

श्यामा पद्मपलाशाक्षी हारांशुशबलस्तनी ।

नानारत्नप्रभाभङ्गेन देवी रोहिणभूभृतः ॥ १९.४३९ ॥

उवाचोर्वी मुखाम्भोजदिव्यगन्धाधिवासिनी ।

हरन्ती बालवल्लीनां भृङ्गभारकदर्थनाम् ॥ १९.४४० ॥

देव त्वच्चरणाम्भोजमध्यविश्रान्तिलालिता ।

न कदाचन जानेऽहं जगद्भारपरिश्रमम ॥ १९.४४१ ॥

ललना क्व नु नामाहं क्व चेमे कुलभूधराः ।

तदेतत्त्वदवष्टम्भसंभारस्य विदृम्भितम् ॥ १९.४४२ ॥

मज्जन्ती सलिले पूर्वं नलिनीदललीलया ।

त्वयैवादिवराहेण दंष्ट्राग्रेणाहमुद्धृता ॥ १९.४४३ ॥

जगत्येकार्णवे पूर्वं निर्मथ्य मधुकैटभौ ।

तन्मेदसा घनीभूता त्वयाहं मेदिनी कृता ॥ १९.४४४ ॥

भार्गवेण कृते कोपादसकृत्क्षत्त्रसंक्षये ।

कालेन पुनरुद्भूता मनोर्वंशे नरेश्वराः ॥ १९.४४५ ॥

तेषां सुभटसंघाते गजवाजिसमाकुले ।

वृद्ध्या निर्विवरीभूते भारेणास्मि निपीडिता ॥ १९.४४६ ॥

क्रियतां तत्क्षयोपायेऽप्यवधानलवः क्षणम् ।

शरण्यं त्रिदेशेशानां त्वामस्मि शरणं गता ॥ १९.४४७ ॥

गुरुरग्निः सुवर्णस्य तिग्मांशुश्च गवां गुरुः ।

तारकाणां गुरुः सोमः सदा मम गुरुर्भवान् ॥ १९.४४८ ॥

श्रुत्वेति पृथिवीवाक्यं विष्णुना तिर्यगीक्षितः ।

तत्समीहिततत्त्वज्ञो देवान्प्राह पितामहः ॥ १९.४४९ ॥

अंशावतारः क्रियतां भवद्भिर्भूतये भुवः ।

एष विष्णुः क्षितौ साक्षादवतारे कृतक्षणः ॥ १९.४५० ॥

पुरा जलनिधेस्तीरे कश्यपेन सह स्थितम् ।

मां गङ्गानुगतः श्रीमानाययौ भूषितोऽम्बुधिः ॥ १९.४५१ ॥

तेनाहं प्लावितो वार्भिर्दृप्तं तमवदं रुषा ।

भो राजवेश शान्तोऽसीत्युरक्तमात्रो भवत्तनुः ॥ १९.४५२ ॥

स जातः शंतनुर्नाम मच्छापाद्वसुधाधिपः ।

वसूनां जननी गङ्गा तमेवानुगता प्रिया ॥ १९.४५३ ॥

तद्वंशे पाण्डुरुत्पन्नो धृतराष्ट्रश्च भूमिपौ ।

धर्मानिलेन्द्राश्विभागाः पाण्डोरायान्ति पुत्रताम् ॥ १९.४५४ ॥

केलरंशस्य पुत्रोऽस्तु धृतराष्ट्रस्य सानुजः ।

अन्येषु राजवंशेषु भवन्तु च सुराः परे ॥ १९.४५५ ॥

रुद्रश्च शिशिरांशुश्च गन्धर्वोरगाराक्षसाः ।

तेषां परस्परं घोरे वैरारणिमुद्भवे ।

रणानले क्षयं यातु घनं क्षितिपकाननम् ॥ १९.४५६ ॥

तान्प्रजापतिरित्युक्त्वा विससर्ज वुसंधराम् ।

ततोंऽशैस्तत्समादिष्टास्त्रिदशाः क्ष्मामवातरन् ॥ १९.४५७ ॥

अत्रान्तरे हेररंशो भगवान्नारदो मुनिः ।

अभ्यायात्तेजसा कुर्वन्दिशः कनकपिङ्गलाः ॥ १९.४५८ ॥

नादशक्तिं कुटिलतां भुवनोदरसंकटे ।

मूर्तामिव वहन्वीणां स्वरज्ञश्छन्दसां निधिः ॥ १९.४५९ ॥

रहस्यभेत्ता जगतां कलिकेलिकुतूहली ।

आवर्जितजटाबन्धः स विष्णु प्रणतोऽभ्यधात् ॥ १९.४६० ॥

भगवन्भुवि भूपालवंशेषु त्रिदशेश्वराः ।

अवतीर्णा भवद्वाक्यात्किंत्वेष विफलः श्रमः ॥ १९.४६१ ॥

असतां तावदमराः समुद्धतमहोरगाः ।

तृष्णाञ्चनेऽपि का शक्तिस्त्वां विना परमेष्ठिनम् ॥ १९.४६२ ॥

दानवा भुवि संभूता भवता ये हताः पुरा ।

अवतीर्य भवानेव तेषां मूलक्षये क्षमः ॥ १९.४६३ ॥

लवणं दानवं हत्वा शत्रुघ्नो राघवानुजः ।

छित्त्वा मधुवनं चक्रे यां पुरीं मथुरां पुरा ॥ १९.४६४ ॥

तस्यामद्य समुत्पन्नः कंसो यदुकुले नृपः ।

योऽसौ हतस्त्वया पूर्वं कालनेमिर्महासुरः ॥ १९.४६५ ॥

हयग्रीवादयो ये च दैत्याः पूर्वं हरास्त्वया ।

ते केशिधेनुकारिष्टप्रलम्बाद्या भुवि स्थिताः ॥ १९.४६६ ॥

तेषां वधाय भगवन्क्रियतां स्वयमुद्यमः ।

नारदेनेत्यभिहिते तथेत्यूचे जगत्पतिः ॥ १९.४६७ ॥

जन्मधामोचितं पृष्टस्तेन ब्रह्मवदत्ततः ।

श्रूयतां भगवन्यस्ते धन्यः समुचितः पिता ॥ १९.४६८ ॥

यज्ञार्थे याज्ञियां धेनुं पुरा पुत्रस्य कश्यपः ।

अदितिः सुरभिश्चास्य वल्लभे जगतीपतेः ॥ १९.४६९ ॥

स यादवकुले जातो वसुदेवो महायशाः ।

देवकी रोहिणी चेति ते तस्य दयिते उभे ॥ १९.४७० ॥

तस्य पुत्रत्वमासाद्य गोपक्रीडारसाकुलः ।

अत्यद्भुतानि कर्मणि दर्शयञ्जहि दानवान् ॥ १९.४७१ ॥

धन्यः स जगतां वन्द्यः कस्य वा न स्पृहापदम् ।

यः श्रोष्यति तवाव्यक्तवर्णं तातेति जल्पतः ॥ १९.४७२ ॥

इति पद्मोद्भवगिरा कृताभ्युपगमे हरौ ।

नारदः प्रययौ भेदी कौतुकेनार्जवेन च ॥ १९.४७३ ॥

विचित्रभास्कराल्लोकलोकसंचरणव्रतः ।

स महीमेत्य मथुरां विवेश विषदां पुरीम् ॥ १९.४७४ ॥

कौतुकानां कुलगृहं कोऽयं सकलसंपदाम् ।

उद्यानं कल्पवल्लीनां वीक्ष्य तां विस्मितोऽभवत् ॥ १९.४७५ ॥

तत्र सिंहासनासीनां कंसं भीमं महीभुजाम् ।

प्रत्यग्रं तं ददर्शोग्रमुग्रसेनजमग्रजः ॥ १९.४७६ ॥

तत्सभां पूजितस्तेन रत्नसिंहासनोज्ज्वलाम् ।

प्रविश्य क्षणमासीनस्तमूचे बलगर्वितम् ॥ १९.४७७ ॥

लोकसंचारिणा कंस मया सुरसभान्तरे ।

श्रुतस्तव वधोपाये मन्त्रः सुचिरचिन्तितः ॥ १९.४७८ ॥

पितुः स्वसुस्ते देवक्या यो गर्भो भविताष्टमः ।

सानुगस्य स ते मृत्युर्विहितः शङ्कितैः सुरैः ॥ १९.४७९ ॥

इत्युदीर्य मुनौ याते श्वसन्कंसः सभास्थितः ।

जहास कान्तिं शत्रूणां दंष्ट्राभिस्तर्जयन्निवः ॥ १९.४८० ॥

सोऽवदत्सचिवानन्तःकोपेऽप्यविकृताननः ।

असूययेव देवानां मुहुरालोकयन्नभः ॥ १९.४८१ ॥

अहो नु भेदशीलेन मुनिना मूढचेतसा ।

नाकौकसामविषये कथितो मन्त्र एष नः ॥ १९.४८२ ॥

नितरां प्रतिकूलोऽहं देवानामधुना स्थितः ।

केशिमुख्याः क्षयायोर्व्यां विचरन्तु मदाशया ॥ १९.४८३ ॥

प्रलम्बलेनुकारिष्टपूतनाकालियादयः ।

कुर्वन्ति यज्वनां लोके देवद्वेषात्पराभवम् ॥ १९.४८४ ॥

देवकीगर्भनिधने तिष्ठन्त्ववहिताः सदा ।

आप्तवादेन नार्यस्तु पुरुषाश्च हिता मम ॥ १९.४८५ ॥

इत्युक्तः सचिवान्कंसो निर्विकारोऽभवद्बहिः ।

अन्तस्तु चिन्तासंतापमुवाह विषदुःसहम् ॥ १९.४८६ ॥

तस्मिन्नवसरे कृष्णो जगद्रक्षाकृतक्षणः ।

पातालमेत्य तान्गर्भानपश्यत्कालनेमिजान् ॥ १९.४८७ ॥

तपसोग्रेण ते प्रापुः पुरा कमलजाद्वरात् ।

हिरण्यकशिपुश्चैतानशपद्ब्रह्मनिन्दकः ॥ १९.४८८ ॥

मामनादृत्य युष्माभिर्यस्मादाराधितो विधिः ।

तस्मात्पूर्वं पितुर्वध्या यूयं गर्भान्मृता भुवि ॥ १९.४८९ ॥

इति तच्छापविवशान्सलिलान्तरनिश्चलान् ।

तान्सुप्तान्वीक्ष्य भगवान्निद्रामूचे स्वरूपिणीम् ॥ १९.४९० ॥

षट्सु गर्भेषु देवक्या जीवानेतान्क्षिप स्वयम् ।

भविष्यत्यन्तकस्तत्र तेषां कंसः स्वचिन्तया ॥ १९.४९१ ॥

सप्तमो रोहिणीगर्भो त्याज्यो विनिमयेन तु ।

गर्भस्तदन्ते देवक्या भविष्याम्यहमष्टमः ॥ १९.४९२ ॥

गोव्रजे नन्दगोपस्य यशोदाख्या कुटुम्बिनी ।

मज्जन्म समकालत्वं तद्गर्भेऽवतर स्वयम् ॥ १९.४९३ ॥

मासेऽष्टमे नवम्यां तु कृष्णरात्र्यां मृगेक्षणे ।

व्यत्यासस्तत्र भविता तुल्ये जन्मन्यथावयोः ॥ १९.४९४ ॥

ततस्त्वं कंसपुरुषैः शिलायामाहता भृशम् ।

गमिष्यसि दिवं देवि दिव्येन वपुषान्विता ॥ १९.४९५ ॥

तत्र त्वं शक्रभगिनी भूत्वा पूज्या दिवौकसाम् ।

दुर्गा निसुम्भसुम्भघ्नी पदं विन्ध्ये करिष्यसि ॥ १९.४९६ ॥

चन्द्रानना कृष्णतनुः सिंहवाहा शिखिध्वजा ।

व्यक्ताव्यक्ता परा शक्तिः कालरात्रिर्जया धृतिः ॥ १९.४९७ ॥

ह्रीः श्रीर्माया मतिः पुष्टिर्देवानामधिदेवता ।

जननी व्यापिनी काली पार्वती धरणी प्रभा ॥ १९.४९८ ॥

सर्वक्षयकरी घोरा शिवा पीयूषवर्षिणी ।

नवमी संनिधिः सिद्धिदायिनी त्वं भविष्यसि ॥ १९.४९९ ॥

इत्यादिश्य हरिर्निद्रामुन्निद्राम्बुरुहेक्षणः ।

तत्कार्यं मनसा ध्यात्वा स्वधाम भगवान्ययौ ॥ १९.५०० ॥

अथ गर्भेषु देवक्याः षट्सु कंसस्य शासनात् ।

हतेषु तेषु क्रमशः किंकरैः क्रूरकारिभिः ॥ १९.५०१ ॥

सप्तमेऽपि समाकृष्य नीते संकर्षणाभिधे ।

विन्तस्तरोहिणीगर्भगेहे स्वजननीधिया ॥ १९.५०२ ॥

अष्टमं जगतां नाथं गर्भमादत्त देवकी ।

येन प्रभातवेलेव साभूदासन्नभास्करा ॥ १९.५०३ ॥

ततः पूर्णेऽष्टमे मासि रात्र्यर्धेऽभिजिता युते ।

असूत देवकी विष्णुं हुताशनमिवारणिः ॥ १९.५०४ ॥

तस्मिन्नेव क्षणे कन्यां यशोदा विषदद्युतिम् ।

अजीजनत्प्रसन्नेषु लोकेष्वच्युतजन्मना ॥ १९.५०५ ॥

कम्पिते भुवने देवगणे मङ्गलभाषिणि ।

पुष्पवर्षैः प्रकाशासु दिक्षु कीर्त्या हरेरिव ॥ १९.५०६ ॥

निद्रया मोहिते रक्षिजने तत्प्रेरिताशयः ।

वसुदेवो रहश्चक्रे गर्भयोर्व्यत्ययं स्वयम् ॥ १९.५०७ ॥

नन्दगोपगृहे पुत्रं विन्यस्यादाय तत्सुताम् ।

देवकीगर्भशयने तत्याज भयशङ्कितः ॥ १९.५०८ ॥

ततः प्रबुद्धैः कन्येयं जातेत्यद्भुतवादिभिः ।

कंसाय दर्शिता गर्भसलिलार्द्रैव रक्षिभिः ॥ १९.५०९ ॥

तच्छासनादाहताथ सा तैः पृथुशिलातले ।

दीप्तायुधानेकभुजा शिखेवाग्नेः स्वमाविशत् ॥ १९.५१० ॥

हारनक्षत्रमालाङ्का शशाङ्करुचिरानना ।

भूतसंमोहजननी रजनीव सविग्रहा ॥ १९.५११ ॥

हंसरत्नप्रभादीप्तकुण्डलाभ्यां विराजिता ।

द्यौरिवास्तोदयासक्तशशिमार्ताण्डमण्डला ॥ १९.५१२ ॥

मयूरबर्हाभरणा मायूरध्वजभूषिता ।

श्यामा सशक्रचापेव प्रावृट्पीनपयोधरा ॥ १९.५१३ ॥

मुकुटेन त्रिशृङ्गेण नानारत्नाट्टहासिना ।

विभूषितकचाबन्धा रोहिणाद्रिवतीव भूः ॥ १९.५१४ ॥

सा भूतसंघानुगता हसन्ती सखनं मुहुः ।

दारयन्ती तमः कंसं तर्जयन्ती समभ्यधात् ॥ १९.५१५ ॥

कंस कंसान्तकालेऽहं कृष्यमाणस्य वैरिणा ।

विदार्य जीवितं देहे पास्यामि तव शौणितम् ॥ १९.५१६ ॥

इत्युक्त्वाभिमतं देशं ययौ कात्यायनी दिवः ।

चकम्पे विफलोद्योगलज्जितश्चोग्रसेनजः ॥ १९.५१७ ॥

स गत्वा देवकीं मूर्ध्ना प्रणिपत्य प्रसाद्य च ।

गर्भाः कालेन ते मातः क्षपिता इत्यभाषत ॥ १९.५१८ ॥

- - - - - कृष्णोत्पत्तिः ॥ ११ ॥ *****

शङ्कितो वसुदेवस्तु रोहिणीसुतमत्यजत् ।

नन्दगोपगृहेष्वेव शीतांशुसुभगद्युतिम् ॥ १९.५१९ ॥

न्यासीकृत्य यशोदायां ज्येष्ठं संकर्षणं शिशुम् ।

गूढे च कृष्णवृत्तान्ते तच्चिन्तानिरतोऽभवत् ॥ १९.५२० ॥

प्रेरितो नन्दगोपस्तु तेन पुत्रहितैषिणा ।

त्यक्त्वा वृन्दावनं घोरं दैत्यकण्टकपन्नगैः ॥ १९.५२१ ॥

गोवर्धनवनोपान्ते यमुनास्निग्धपादपे ।

वीतविघ्ने व्रजं चक्रे बहुभिर्गोकुलैर्वृतः ॥ १९.५२२ ॥

गम्भीरमन्थनिर्घोषघनानन्दितचातके ।

पाकावर्तिघृतामोदसंपूरितसमीरणे ॥ १९.५२३ ॥

वनप्राप्यप्रतिच्छन्नवत्सहुंकारगोगणे ।

गोपालीकाकलीगीतनिश्चलाङ्ककुरङ्गके ॥ १९.५२४ ॥

कालिन्दीतीरवानीरलतादोलायितार्भके ।

भ्रात्रा सहेन्दुशुभ्रेण कृष्णो मरकतद्युतिः ॥ १९.५२५ ॥

व्यवर्धत वनोद्भेदः स गाङ्ग इव यामुनः ।

प्रसुप्तं शकटस्याधस्तृप्ते स्तन्येन निश्चलम् ॥ १९.५२६ ॥

कदाचित्तं समुत्सृज्य यशोदा यमुनां ययौ ।

प्रबुद्धः सोऽथ शनकैः पाणिपादं क्षिपन्मुहुः ॥ १९.५२७ ॥

रुरोद दशनोद्द्योतैः क्षीरपूरैरिवाङ्कितः ।

चरणौ च प्रसार्योर्ध्वं जृम्भाविकसिताननः ॥ १९.५२८ ॥

पादेनैकेन शकटं विपर्यस्तमधो व्यधात् ।

अत्रान्तरे सम्भ्येत्य यशोदा प्रस्नुतस्तनी ॥ १९.५२९ ॥

शकटं भग्नमालोक्य चकम्पे सुतवत्सला ।

सा शिशुं स्वस्थमादायेत्यूचे नन्दो विशङ्कितः ॥ १९.५३० ॥

केनेदं शकटं भग्नं विना मत्तवृषाहतीः ।

तेनेति पृष्टाः शिशवः कृष्णेनेति बभाषिरे ॥ १९.५३१ ॥

- - - - - शकटभङ्गः ॥ १२ ॥ *****

ततः कृष्णोत्सवे लोके सुप्ते निशि निशाचरी ।

आययौ पूतना नाम मायया प्रस्नुतस्तनी ॥ १९.५३२ ॥

सा दधौ वदने तस्य शिशोर्निधनकाङ्क्षिणी ।

स्तनं प्राणैः सहास्याश्च तमाकृष्योच्चकर्त सः ॥ १९.५३३ ॥

हतायां व्याघ्रघोषायां तस्यामभ्युत्थितो भयात् ।

सभार्यो नन्दगोपोओऽभून्मग्नोन्मग्न इवाम्बुधौ ॥ १९.५३४ ॥

ततो विदितवृत्तान्तौ विस्मयानन्दनिर्भरौ ।

तौ दम्पती बहिः कंसभयान्नो कंसभयान्नो किंचिदूचतुः ॥ १९.५३५ ॥

- - - - - पूतनावधः ॥ १३ ॥ *****

शनकैश्चरणन्यासमक्रूरैः सगतागतैः ।

हर्षं ववर्ष बन्धूनां त्रैलोक्याक्रमणक्षमः ॥ १९.५३६ ॥

कालेन वर्धमानौ तौ कृष्णसंकर्षणौ वने ।

पूर्यमाणौ मदेनेव पञ्चाननकिशोरकौ ॥ १९.५३७ ॥

विरेजतुः शिशुक्रीडायां सुभूषितविग्रहौ ।

रक्ष्यमाणाविवालिङ्ग्य भुवो भारक्षयक्षमौ ॥ १९.५३८ ॥

कान्तौ कमलपत्राक्षौ चलत्कुटिलकुन्तलौ ।

स्मितेन चक्रतुः कण्ठे सितमुक्तावलीरिव ॥ १९.५३९ ॥

तुल्यलावण्यमाधुर्यधुर्यं वपुरभूत्तयोः ।

महतां संश्रये नूनमेककार्यविरोधिने ॥ १९.५४० ॥

स्वेच्छागोपतनौ तत्र देवे त्रैलोक्यगोप्तरि ।

स्पृहा तत्सङ्गधन्येभ्यो गोपेभ्योऽबूद्दिवौकसाम् ॥ १९.५४१ ॥

धर्तुं यदा यशोदा तं न शशाक महाजवम् ।

आबबन्धोदरे धीरा दाम्ना दामोदरं तदा ॥ १९.५४२ ॥

तरसा स समाकृष्य दामबद्धमुलूखलम् ।

विचचार वने केलिचतुरो विगतश्रमः ॥ १९.५४३ ॥

विस्मयं प्रययुर्गोपास्तस्योलूखलकर्षणात् ।

मन्दराधारधैर्येऽपि जगद्यस्मिन्न विस्मितम् ॥ १९.५४४ ॥

विपुलौ यमुनातीरे संहातावर्जुनद्रुमौ ।

स प्राप्य तन्मध्यगतश्चकर्षोलूखलं बलात् ॥ १९.५४५ ॥

तद्बलोन्मूलितौ वेगात्पेततुरथ तौ द्रुमौ ।

येनाभूत्क्षोभगम्भीरः संरम्भो यमुनाम्भसः ॥ १९.५४६ ॥

गोपबालास्तदालोक्य भयस्मयतयाकुलाः ।

यशोदामूचिरे गत्वा संभ्रमाकुलितस्वराः ॥ १९.५४७ ॥

अयि प्रमादशीले त्वं सुखसुप्तेन मोहिता ।

पूज्यौ तौ तव पुत्रस्य पतितावुपरि द्रुमौ ॥ १९.५४८ ॥

देवान्महाभयान्मुक्तं गत्वा तं पश्य दारकम् ।

श्रुत्वेति स्वेदमग्नेव यशोदा कम्पिता ययौ ॥ १९.५४९ ॥

सा विलोक्य तयोर्मध्ये महापादपयोः सुतम् ।

संत्रासं च प्रसादं च विस्मयं च ययौ क्रमात् ॥ १९.५५० ॥

ततः सर्वे समभ्येत्य गोपवृद्धाः ससंभ्रमम् ।

अवदन्केन घोषस्य दैवतौ(?) पातिताविमौ ॥ १९.५५१ ॥

नाभवन्मेघनिर्घातो व्यभ्रे का विद्युतां कथा ।

नेह मत्तो द्विपः कस्मादकस्माद्द्रुमयोः क्षयः ॥ १९.५५२ ॥

इति वादिनि गोपालमण्डले सुतमग्रहीत् ।

विमुच्य नन्दः सासूयं यशोदामवलोकयन् ॥ १९.५५३ ॥

निन्दति स्ववधूं याते नन्दगोपे सहानुगे ।

गृहे गृहे भवत्कोऽपि द्रुमभङ्गकथास्मयः ॥ १९.५५४ ॥

▪ ▪ ▪ ▪ ▪ द्रुमनिपातः ॥ १४ ॥ *****

किंचिदुन्मुक्तबाल्यौ तावथ संकर्षणाच्युतौ ।

नीलपीताम्बरौ काकपक्षाङ्कौ चेरतुर्वने ॥ १९.५५५ ॥

उत्तंसकुसुमापीडैः फलविभ्रमकारिणौ ।

रक्षातिलकरत्नाग्राविव नागकुमारकौ ॥ १९.५५६ ॥

मयूरपक्षाभरणप्रभापल्लवशालिनौ ।

लावण्यामृतनिष्यन्दौ पारिजातात्मजाविव ॥ १९.५५७ ॥

ह्रस्ववेणुकलक्वाणस्वभावमधुरस्वनौ ।

प्रांशुशैलशिलासीनाविव किन्नरदारकौ ॥ १९.५५८ ॥

उत्पतत्कन्दुकोदारगुलिकाचतुरभ्रमौ ।

विचित्रमाल्यललितौ विद्याधरसुताविव ॥ १९.५५९ ॥

पाणौ दधानौ बाणाङ्ककेलिकोदण्डण्डिकाम् ।

पुनर्वनमिवायातौ वीरौ राघवलक्ष्मणौ ॥ १९.५६० ॥

विहरन्तौ मदोदारौ तौ राजीवविलोचनौ ।

रेजतुः किंचिदासन्ननवयौवनविभ्रामौ ॥ १९.५६१ ॥

चिरभोगपरिम्लानविरलौषधिपादपे ।

नारंस्त केशवस्तत्र नवकाननकौतुकी ॥ १९.५६२ ॥

स कृत्वा व्रजसंत्रासं गूढं मायामयैर्वृकैः ।

रन्तुं वृन्दावनोपान्तं कालिन्दीसुन्दरं ययौ ॥ १९.५६३ ॥

निविष्टे गोकुले तत्र निर्भये सेव्यसंश्रये ।

नवकाननसंभोगः कोऽपि गोपकुलेऽभवत् ॥ १९.५६४ ॥

अदृश्यत ततः श्यामा नवोद्गतपयोधरा ।

वधूर्नवेव कृष्णस्य प्रावृड्विहितकौतुका ॥ १९.५६५ ॥

नववारिधरैर्व्योम्नि चलत्कलभविभ्रमैः ।

वियोगिनीमनोजन्मवह्निधूमोद्गमायितम् ॥ १९.५६६ ॥

जयिनः स्मरराजस्य वीजयन्व्यजनैरिव ।

ततो विरहिणीचिन्तानिःश्वासप्रसभोऽनिलः ॥ १९.५६७ ॥

भुवि कान्तास्मितसिता बभुः केतकसूचयः ।

मेघामर्दविशीर्णस्य शिशिरांशोः कला इव ॥ १९.५६८ ॥

बलाकावलयाश्चेरुर्गुरुगर्जरता दिवि ।

मत्तमेघगजेन्द्राणां दन्तकान्तिचया इव ॥ १९.५६९ ॥

घनानां शक्रचापेन वनानां शिखिताण्डवैः ।

परस्परप्रभापुञ्जस्पर्धेव समजायत ॥ १९.५७० ॥

वर्षाक्षालितसच्छायतमालकदलीभराः ।

स्निग्धस्नातेव युवतिर्विरराज वसुंधरा ॥ १९.५७१ ॥

त्वङ्गत्तुरङ्गभ्रूभङ्गा फेनकूटाट्ट(ट्ट)हासिनी ।

मत्तेव यौवनवती बभ्राम यमुनावने ॥ १९.५७२ ॥

बभौ सौदामिनीदामकान्तिः कापि पयोमुचाम् ।

मेरुशेखरलग्नेव तप्तजाम्बूनदच्छटा ॥ १९.५७३ ॥

नीलाभ्रचकिताः क्वापि राजहंसगणा ययुः ।

चिरं नष्टमिवान्वेष्टुं शशाङ्कं कुमुदाकराः ॥ १९.५७४ ॥

तस्मिन्कदम्बकुटजामोदप्रमुद(?)निर्भरे ।

काले विरहिणां काले कृष्णं संकर्षणोऽब्रवीत् ॥ १९.५७५ ॥

पूरितं परिसर्पद्भिर्बलाकाफेनहासिभिः ।

पश्य कृष्ण घनैर्व्योम यामुनैरिव वारिभिः ॥ १९.५७६ ॥

तडित्पीताम्बरजुषां वनमालावलम्बिनाम् ।

विभाति वारिवाहानां तवेव श्यामलं वपुः ॥ १९.५७७ ॥

इत्यग्रजवचः श्रुत्वा प्रणयाभरणं हरिः ।

ललास लीलाभरणो मधूराभरणे वने ॥ १९.५७८ ॥

- ▪ ▪ ▪ ▪ ▪ प्रावृड्वर्णनम् ॥ १५ ॥ *****

वर्षच्छेदप्रकाशेऽथ नवीभूत इवाखिले ।

कदाचिद्विहरन्कृष्णः कानने भ्रातरं विना ॥ १९.५७९ ॥

न्यग्रोधं प्राप विपुलं वृतो गोपकुमारकैः ।

प्रवृद्धभुजसंभारैर्नभो मातुमिवोद्गतम् ॥ १९.५८० ॥

विद्याधरसनाधानि त्रिदशाध्युषितानि च ।

कुलाद्रिशिखराणीव कौतुकाद्द्रष्टुमुत्थितम् ॥ १९.५८१ ॥

सर्वाशापूरणोदारसच्छायं भूषणं भुवः ।

प्रासादं वन्देवीनां भाण्डीरं नाम पादपम् ॥ १९.५८२ ॥

तं दृष्ट्वा स्निग्धमानन्दबन्धुं शौरिर्निरन्तरम् ।

हृष्टश्चचार तन्मूले गीतवाद्यविनोदकृत् ॥ १९.५८३ ॥

ततो ददर्श कालिन्दीं जगद्द्विपमदच्छटाम् ।

त्वङ्गत्तरङ्गकुटिलां दीर्घवेणीमिवावनेः ॥ १९.५८४ ॥

फेनबुद्बुदनक्षत्रमालां पुण्यजनोचिताम् ।

यातां तापिच्छसच्चायां द्रवतामिव शर्वरीम् ॥ १९.५८५ ॥

विस्फारशफरोत्फालस्फुरत्स्फीतफणाङ्किताम् ।

सेनामिव भुजङ्गानां तरङ्गाभोगभङ्गुराम् ॥ १९.५८६ ॥

उन्निद्रपद्मवदनां विकचोत्पललोचनाम् ।

चक्रवाककुचाभोगां श्यामां हंससितस्मिताम् ॥ १९.५८७ ॥

चण्डांशुतापविगलन्मणिपर्वतकन्दराम् ।

संप्रवृत्तामिवावर्तस्फूर्जन्मरकतद्रवाम् ॥ १९.५८८ ॥

क्वचित्सुप्तामिवास्पन्दां क्वचिन्मत्तामिवोद्धताम् ।

मूर्छितां विषवेगेन क्वचिद्दष्टामिवाहिना ॥ १९.५८९ ॥

क्वचिद्भीतामिव च्छन्नां क्वचिद्व्याग्रमिवाकुलाम् ।

अमन्दविभ्रमालोलां क्वचिन्मानवतीमिव ॥ १९.५९० ॥

मज्जद्गोपाङ्गनातुङ्गकुचकुम्भोन्नतोदकाम् ।

ननन्द कृष्णस्तां दृष्ट्वा तरुणीमिव हारिणीम् ॥ १९.५९१ ॥

ततो ददर्श पातालतलगम्भीरभीषणम् ।

करालकालभ्रूभङ्गभङ्गुरोर्मिशताकुलम् ॥ १९.५९२ ॥

तमोमलिनमत्युग्रमकारणभयप्रदम् ।

दूरात्परिहृतं सर्वैः खलं नरमिवेश्वरम् ॥ १९.५९३ ॥

अद्यापि न जगद्ग्रस्तं मयेति ज्वलिताशयम् ।

धूमोद्गमायितैस्तोयैर्निःश्वसन्तमिवानिशम् ॥ १९.५९४ ॥

व्याप्तमाशीर्विषैर्घोरैस्तीरकोटरशायिभिः ।

वीतचन्द्रार्कनक्षत्रं स्वमिवातङ्कदं ह्रदम् ॥ १९.५९५ ॥

निक्षीक्ष्य दूराक्षोभ्यं क्षणं हरिरचिन्तयत् ।

अस्मिन्स कालियो नाम कालकूटोत्कटः फणी ॥ १९.५९६ ॥

निवासत्यसिताकारः सर्वप्राणिभयंकरः ।

येनेयं विषनिःश्वासैर्दूषिता यमुनातटी ॥ १९.५९७ ॥

सोऽयं मत्तोऽतिदर्पेण मत्तो नाशमिहार्हति ।

संभवोऽयं मम प्रायो विनाशाय दुरात्मनाम् ॥ १९.५९८ ॥

विचिन्त्येति ह्रदोपान्ताकदम्बतरुपुत्रकम् ।

बद्धकक्ष्यः समारुह्य पपात नभसोऽम्भसि ॥ १९.५९९ ॥

गर्जता कृष्णमेघेन सा वेगमवपातिना ।

उद्ययौ क्षोभितां वारि विकरालोर्मिशेखरम् ॥ १९.६०० ॥

दूरोत्पतितशैलाभकल्लोलविनिपातजः ।

तदभूद्घोरसंघट्टटाङ्कारो घट्टिताम्बरः ॥ १९.६०१ ॥

ततः स दहनोद्गारविषफूत्कारभीषणः ।

पञ्चास्यो रक्तनयनः कालियः समदृश्यत ॥ १९.६०२ ॥

अञ्जनाचलतुल्येन तस्य भोगेन सर्वतः ।

वर्धमानेन संरुद्धं जलं व्योम व्यगाहत ॥ १९.६०३ ॥

तत्कोपज्वलनज्वालावलये क्षिप्रमम्भसाम् ।

अपरौर्वानलभ्रान्तिजनकः प्रलोयऽभवत् ॥ १९.६०४ ॥

दन्तनिष्पेषजास्तस्य विषानलपरम्पराः ।

भस्मसात्सहसा तीरतरुमालां प्रचक्रिरे ॥ १९.६०५ ॥

भोगेनावेष्ट्यमानोऽथ कृष्णः कृष्णेन भोगिना ।

बभौ वलयितो वार्भिस्तमाल इव यामुनैः ॥ १९.६०६ ॥

सानुगेनोरगेन्द्रेण गोविन्दं गोपदारकाः ।

दंष्ट्राकोटिविषोल्कभिर्व्याप्तं वीक्ष्य समन्ततः ॥ १९.६०७ ॥

संत्रस्ता व्रजमभ्येत्य चक्रन्दुः स्रस्तकन्दुकाः ।

एष दामोदरो घोरे पतितः कालियाम्भसि ॥ १९.६०८ ॥

वेष्टितः कालकल्पेन भोगिनाथ विषेत्कटम् ।

वचः श्रुत्वा ययुः सर्वे नन्दगोपमुखा ह्रदम् ॥ १९.६०९ ॥

प्रत्यग्रायासनिःस्पन्दे संदेहादोलिताशये ।

नन्दगोपे फणिव्याप्तपुत्रवक्त्रावलोकिनि ॥ १९.६१० ॥

तारप्रलापमुखरे यशोदादुःस्वदारिते ।

स्त्रीजनेऽतीव संतप्ते प्याप्ते रागविषैरिव ॥ १९.६११ ॥

तीरं संकर्षणेनैत्य संज्ञयैव विबोधितः ।

भुजाभ्यां भीषणाभोगं भोगमास्फाल्य भोगिनः ॥ १९.६१२ ॥

चरणाभ्यां समाक्रम्य हरिर्बन्धाद्विनिर्गतः ।

अवनाम्य फणाचक्रं सरत्नं ज्वलनोल्बणम् ।

आरुरोह शिरःस्फारं मध्यमं मधुसूदनः ॥ १९.६१३ ॥

ततः स सर्वजगतां चराचरगुरुर्गुरुः ।

उन्ममर्द पदन्यासैर्नृत्यन्निव सविभ्रमम् ॥ १९.६१४ ॥

स्रस्तदर्पो गलद्धैर्यः प्रोद्वान्तोग्रविषस्ततः ।

स कृष्णं रुधिरोद्गारगलिताक्षरमभ्यधात् ॥ १९.६१५ ॥

भीतः संरक्षणीयोऽहं नस्रः सर्वात्मना त्वया ।

अञ्जलिव्यञ्जनं दैन्यं जीवपुण्यमिदं मम ॥ १९.६१६ ॥

दामोदरो निशम्यैतज्जगाद भुजगाधिपम् ।

ह्रदोऽयमशिवाचार सेव्योऽस्तु भवता विना ॥ १९.६१७ ॥

ततस्त्वमम्बुधिं गच्छ यदि वाञ्छसि जीवितम् ।

तत्र मत्पादमुद्रा ते तार्क्ष्यरक्षा भविष्यति ॥ १९.६१८ ॥

इति तच्छासनाद्याते सानुगे भुजगे क्षणात् ।

ययुः कृष्णं प्रशंसन्तो गोपाः सानन्दविस्मयाः ॥ १९.६१९ ॥

▪ ▪ ▪ ▪ ▪ कालियसूदनम् ॥ १६ ॥ *****

ततो विविशतुः केलिकलौ हलधराच्युतौ ।

विशालतालहिन्तालतमालश्यामलं वनम् ॥ १९.६२० ॥

पञ्चतालफलास्वादनन्दितोन्मदमानसौ ।

चेरतुस्तत्र तौ डिम्बक्रीडाडम्बरतत्परौ ॥ १९.६२१ ॥

अथाययौ धेनुकाख्यो दैत्यस्तालवनाश्रयः ।

करालकेसरस्फारस्कन्धबन्धोद्धुरः खरः ॥ १९.६२२ ॥

तस्यानुगैर्महाकायैर्गर्दभैरभितो वृतम् ।

उदभूत्तालगहनं व्याप्तं धूमोद्गतैरिव ॥ १९.६२३ ॥

धेनुकोऽथ भृशं कोपाद्रुधिरारुणलोचनः ।

स्वुरैर्निर्दारयन्भूमिं रामकृष्णवधेप्सया ॥ १९.६२४ ॥

आह्वानमिव दैत्यानां कुर्वन्पातालवासिनाम् ।

घट्टयन्निव हेषाभिर्वज्रोग्रदशनायुधः ॥ १९.६२५ ॥

अभ्यधावत्समुद्भ्रान्तपुच्छः संकर्षणं जवात् ।

वातावधूतैकशिखश्चन्द्रं मेघ इवाकुलः ॥ १९.६२६ ॥

विदार्दशनैः सोऽथ रौहिणेयमसंभ्रमम् ।

बभूव पश्चिममुखः प्रहाराय पराङ्मुखः ॥ १९.६२७ ॥

ताभ्यामेव समादाय तं खुराभ्यां प्रहारिणम् ।

चिक्षेप तालशिखरे फलार्थीव हलायुधः ॥ १९.६२८ ॥

स भग्नोरुतरुस्कन्धस्त्रुट्यत्कठिनकीकसः ।

पपात निष्प्रारम्भः सह तालफलैर्भुवि ॥ १९.६२९ ॥

सानुगेऽथ हते तस्मिन्हते खरपराक्रमे ।

वीतविघ्नमभूत्सेव्यं तत्तालवनमायतम् ॥ १९.६३० ॥

▪ ▪ ▪ ▪ ▪ धेनुकवधः ॥ १७ ॥ *****

भूयो भाण्डीरविपिनं तौ गत्वा केलिशालिनौ ।

द्वन्द्वोपतनलीलाभिर्गोपपुत्रैर्विजह्रतुः ॥ १९.६३१ ॥

अथ तावाययौ वन्यकुसुमोत्तंसभूषणः ।

गोपवेषच्छलच्चन्नः प्रलम्बो नाम दानवः ॥ १९.६३२ ॥

क्रीडाभिराशयग्राही तोषयित्वा स तौ मुहुः ।

जहार स्कन्धमारूढं कदाचित्केशवाग्रजम् ॥ १९.६३३ ॥

स तं हृत्वा द्रुततिर्निजरूपमदर्शयत् ।

तमःपटावृता येन भीत्येव ककुभोऽभवन् ॥ १९.६३४ ॥

तस्याञ्जनाद्रिशिखराकारे मूर्ध्नि परिस्फुरन् ।

दावानलशिखापुञ्जपिङ्गश्चूडामणिर्बभौ ॥ १९.६३५ ॥

तस्याबभौ मुखोद्गीर्णा सधूमदहनावली ।

नीलपीता पताकेव दंष्ट्रातोरणलम्बिनी ॥ १९.६३६ ॥

नीलशैलशिलाकूटविकटे रोहिणीसुतः ।

बभार दानवस्कन्धे शरदम्भोदविभ्रमम् ॥ १९.६३७ ॥

ह्रियमामः स तेनाशु मानुषं भावमाश्रितः ।

संमितं केशवेनारात्पुराणं स्मारितो वपुः ॥ १९.६३८ ॥

यत्तत्परतरं धाम वागीशं विश्वतोमुखम् ।

सर्वदेवमयं सत्यमनन्तमजमव्ययम् ॥ १९.६३९ ॥

निजं विपुलामास्थाय बलं भूमिधृतिक्षमम् ।

जघान मुष्टिना मूर्ध्नि प्रलम्बं धेनुकान्तकः ॥ १९.६४० ॥

मुष्टिपाताद्विघटितस्फुटल्ललाटकर्परम् ।

काये विवेश दैत्यस्य कीर्मरक्तच्छटं शिरः ॥ १९.६४१ ॥

स्कन्धादवस्रुते रामे गिरिस्फारं कलेवरम् ।

निपपात प्रलम्बस्य लम्बमानभुजद्वयम् ॥ १९.६४२ ॥

▪ ▪ ▪ ▪ ▪ प्रलम्बवधः ॥ १८ ॥ *****

बलिना बलदेवेन प्रलम्बे विनिपातिते ।

प्रयाते वार्षिके तत्र शनैर्मासचतुष्टये ॥ १९.६४३ ॥

प्रत्यासन्ने नवौत्सुक्यनिर्भरानन्ददायिनि ।

क्रतूत्सवे समारम्भो बभूव वनवासिनाम् ॥ १९.६४४ ॥

ततः सप्तच्छदामोदमालिनीहंसनूपुरा ।

विषदेन्दुमुखी फुल्लनीलोत्पलविलोचना ॥ १९.६४५ ॥

निमन्त्रितेव प्रमदा तस्मिन्व्रजमहोत्सवे ।

अदृश्यत सिताम्भोदभक्तिस्मेराम्बरा शरत् ॥ १९.६४६ ॥

तत्र गोपगिरा ज्ञात्वा यागं कृष्णं मरुत्पतेः ।

ऊचे स्मितसितालोकैः पाञ्चजन्यमिवासृजन् ॥ १९.६४७ ॥

अहो नु हास्यजननी मुग्धेयं भवतां मतिः ।

यागः शक्राय नार्हेऽयं गोपा हि गिरिदैवताः ॥ १९.६४८ ॥

इति तद्वचसा गोपैर्गिरियज्ञे प्रवर्तते ।

विहिता भक्ष्यगिरयो घृतक्षीरोरुनिर्झराः ॥ १९.६४९ ॥

गोवर्धनगिरेर्यज्ञे तस्मिन्बह्वन्नसंभृते ।

पायसैः सदधिच्छन्नैर्हिमच्छन्नेव भूरभूत् ॥ १९.६५० ॥

मयूरपत्त्राभरणाः कुसमोत्तंसशेखराः ।

तस्मिन्यागे बभुर्गोपा गावश्च सुविभूषिताः ॥ १९.६५१ ॥

गिरिमूर्धनि विश्वात्मा परेण गिरिवर्ष्मणा ।

वपुषा बुभुजे कृष्णस्तत्सर्वं तैर्निवेदितम् ॥ १९.६५२ ॥

तत्प्रहर्षस्मितोदारं निजं दिव्यं महद्वपुः ।

प्रणनाम स्वयं कृष्णो गोपैः सह गिरिप्रभम् ॥ १९.६५३ ॥

▪ ▪ ▪ ▪ ▪ गिरियज्ञः ॥ १९ ॥ *****

वृत्ते महोत्सवे तस्मिञ्शतमन्युः क्रुधा ज्वलन् ।

आदिदेश व्रजोच्छित्त्यै घोरान्संवर्तकाम्बुदान् ॥ १९.६५४ ॥

तेन ते प्रेरिताः क्षिप्रं नीलशैलशिलाघनाः ।

घनाश्चक्रुर्जगद्व्याप्तं कालरात्रिशतैरिव ॥ १९.६५५ ॥

भिन्नाञ्जनघनच्छायैर्जीमूतैर्गर्जितोर्जितैः ।

ग्रस्ता इवोद्धतैः क्षिप्रं नादृश्यन्त दिशो दश ॥ १९.६५६ ॥

ततः करिकराकारा स्तम्भसंरम्भविभ्रमाः ।

पेतुर्धराधरे धाराः परिहारा धृतेः परम् ॥ १९.६५७ ॥

कालाट्टहासविकटा जलोद्गाराः प्रपातिनः ।

विरेजुः कालमेघानां गिरीणामिव निर्झराः ॥ १९.६५८ ॥

सोऽभवद्भीषणाभोगमेघसंघातनिर्मितः ।

उल्लसत्स्थूलकल्लोललोलः सलिलविप्लवः ॥ १९.६५९ ॥

विद्युत्पिशङ्गकेशानां गर्जतां मेघरक्षसाम् ।

भयेनेव ययौ क्वापी जगती जलसंस्तुता ॥ १९.६६० ॥

ते शक्राधिष्टिता घोरा दीप्ताशक्रायुधाङ्किताः ।

वर्षाशनिनिपातेन चक्रिरे कदनं गवाम् ॥ १९.६६१ ॥

वर्त्मविन्यस्तनेत्राणां पतन्तीनामितस्ततः ।

त्रासशीतपरीतानां घोरस्तसामभूत्क्षयः ॥ १९.६६२ ॥

अयं स प्रलयारम्भः पुष्करावर्तभीषणः ।

संप्राप्त इति भीतानां गोपानामभवद्रवः ॥ १९.६६३ ॥

तद्दृष्ट्वा वैशसं घोरं नाशायोपस्थितं गवाम् ।

गोविन्दो जगतां गोप्ता रक्षां क्षणमचिन्तयत् ॥ १९.६६४ ॥

इममुत्पाट्य शैलेन्द्रमहं गोवर्धनं बलात् ।

छत्रीकरोम्युपस्तानां संश्रयं विपुलं गवाम् ॥ १९.६६५ ॥

इति ध्यात्वा धियं धीरो निदधे भूधरे दृशम् ।

उत्पाटनक्षणक्षान्त्यै फुल्लपद्मावलीमिव ॥ १९.६६६ ॥

ततः सपदि विश्वात्मा बलेन महतान्वितः ।

उज्जहार गिरिं दोर्भ्यां स्फुटन्मूलशिखातलम् ॥ १९.६६७ ॥

मूलावलम्बिनः क्षिप्रं पातालमिव निर्गताः ।

उद्धृतस्य गिरेः सर्पाः स्नायुजालतुलां ययुः ॥ १९.६६८ ॥

संपीडितशिलापीडानिबडिकृतनिर्झरैः ।

बभुः पलितकल्लोलदुकूलवलिता दिशः ॥ १९.६६९ ॥

हरितालरजःपुञ्जैः पवनावर्तनर्तितैः ।

बभौ तत्पातितैर्व्याप्तः कृष्णः पीतांशुकैरिव ॥ १९.६७० ॥

व्याधूतास्तस्य पार्श्वेषु क्षणमुत्पततो घनाः ।

क्ष्माभृतः पक्षविक्षेपभ्रान्तिं चक्रुः स्वचारिणाम् ॥ १९.६७१ ॥

तस्मिन्गोविन्ददोर्दण्डच्छत्रीभूते महीभृति ।

फुल्लमालावली स्रस्ता चक्रे स्रग्दामविभ्रमम् ॥ १९.६७२ ॥

स्वचारिणोऽद्य सुचिरादिमे ते गिरयो वयम् ।

जाता वज्रधर क्ष्माभृत्पक्षच्छेदमदं त्यज ॥ १९.६७३ ॥

इति त्रासोत्पतन्तीनां विद्याधरमृगीदृशाम् ।

रशनानूपुरारावैः स जगादेव भूधरः ॥ १९.६७४ ॥

पर्यस्तप्रसरस्तोभक्षुभ्यत्केसरिगर्जितैः ।

स घोरघनसंघातानतर्जयदिवोर्जितान् ॥ १९.६७५ ॥

स समुन्मूलनायाससंभ्रान्तद्विपयूथपैः ।

बभौ खे शेखरोल्लेखपातितैरिव वारिदैः ॥ १९.६७६ ॥

घूर्णमानमहाशाखिकुसुमोत्कररेणुभिः ।

स रक्षामण्डलानीव धेनूनां विदधे मुहुः ॥ १९.६७७ ॥

त्रासापतत्सिद्धवधूतारहारैस्तरङ्गिभिः ।

अधःस्थान्गगनस्थोऽद्रिर्जहासेव महीधरान् ॥ १९.६७८ ॥

तं दृष्ट्वा खेचराः प्राहुः किमयं गिरिरुत्थितः ।

यदि न प्रलयारम्भो यदि नाकालविप्लवः ॥ १९.६७९ ॥

ततः कृष्णगिरा गोपाः शैलोत्पाटनभूगृहम् ।

विपुलं विविशुः शान्त्यै निखिलैः सह गोधनैः ॥ १९.६८० ॥

निवाते निर्जले तस्मिन्सुविशाले गिरेस्तटे ।

तस्थुर्जगान्निवासेन गावो गोपाश्च रभिताः ॥ १९.६८१ ॥

वृष्टिच्छन्ने प्रयातेऽथ सप्तरात्रे मरुत्पतिः ।

जगाम विफलोद्योगलज्जितो जलदैः सह ॥ १९.६८२ ॥

ततस्तं विपुलाभोगतुङ्गश‍ृङ्गं गुरुं गिरिम् ।

न्यवेशयन्निजपदे लीलयैव जगद्गुरुः ॥ १९.६८३ ॥

- - - - - गोवर्धनोद्धरणम् ॥ २० ॥ *****

सप्तरात्रं धृते तस्मिन्गिरौ गरुडलक्ष्मणाः ।

तं द्रष्टुमाययौ साक्षात्सहस्राक्षोऽतिविस्मितः ॥ १९.६८४ ॥

जङ्गमादिव कैलासात्सोऽवतीर्य सुरद्विपात् ।

गोवर्धनशिलासीनं ददर्श मधुसूदनम् ॥ १९.६८५ ॥

अन्तर्हितेन तार्क्ष्येण पक्षैराच्छादितातपम् ।

असत्याकलितेनैव तेजसापूरिताम्बरम् ॥ १९.६८६ ॥

मयूरकण्ठसच्छायं तप्तहेमप्रभांशुकम् ।

इन्द्रनीलगिरेः श‍ृङ्गं तप्तं बालातपैरिव ॥ १९.६८७ ॥

तं वीक्ष्य कमलाकान्तं गोपवेषधरं हरिम् ।

सहस्रनेत्रमात्मानं मनसा प्रशशंस सः ॥ १९.६८८ ॥

मौलिकुण्डलकेयूरस्फाररत्नांशुसंचयैः ।

इन्द्रायुधसहस्राणि मुहुर्दिक्षु क्षिपन्निव ॥ १९.६८९ ॥

अभ्येत्य केशवं शक्रो बभाषे प्रणयोचितम् ।

दन्तत्विषा दश दिशः सुधया पूरयन्निव ॥ १९.६९० ॥

अतिदैवमिदं कर्म तव कृष्ण किमद्भुतम् ।

शक्तिरल्पीयसी यस्य समग्रजगतां गतिः ॥ १९.६९१ ॥

सर्वलोकोपरि परं वर्तन्ते कामधेनवः ।

तासां त्रिदशपूज्यानां ब्रह्मणश्चास्मि शासनात् ॥ १९.६९२ ॥

प्राप्तोऽभिषेक्तुं गोविन्द राज्ये त्वामीप्सितं गवाम् ।

इत्युक्त्वा रत्नकुम्भेन मूर्ध्नि तस्य ददौ पयः ॥ १९.६९३ ॥

उपेन्द्रमभिषिच्येन्द्रः प्रसाद्य च पुनः पुनः ।

पाल्यस्त्वया सखा बन्धुः स्वस्रेयो जनकस्य यः ॥ १९.६९४ ॥

त्वया दैत्यच्छिदा कृष्ण केशिकंसवधे कृते ।

भवत्सहायः पृथिवीं स जेष्यति धनंजयः ॥ १९.६९५ ॥

इति प्रणयिनो वाचं कृष्णः श्रुत्वा शचीपतेः ।

जानन्भारतवृत्तान्तं तथेति प्रत्यपद्यत ॥ १९.६९६ ॥

एवं रहः समाभाष्य जम्भहासुरसूदनम् ।

ऐरावणकरालूनमेघेन नभसा ययौ ॥ १९.६९७ ॥

- - - - - गोविन्दाभिषेकः ॥ २१ ॥ *****

गोपवेषधरं गोपा देवं मत्वा तमद्भुतम् ।

मुद्रिता इव तच्छक्त्या मुग्धा नो किंचिदूचिरे ॥ १९.६९८ ॥

ततस्तं पद्मपत्त्राक्षं निवृत्ताशेषशौशवम् ।

जना निर्भरतारुण्यलावण्यं नयनैः पपुः ॥ १९.६९९ ॥

शरन्निशासु संपूर्णचन्द्रस्मितसितासु सः ।

हरिणीहारिनेत्राभिर्विजहार रतिप्रियः ॥ १९.७०० ॥

स रागवृषयुद्धेषु नियुद्धेषु च कौतुकी ।

वीरशृङ्गाररभसः स बभूव मनोहरः ॥ १९.७०१ ॥

छेकोक्तिषु कृताभ्यासा वेशकर्मसु सादराः ।

बभुस्ता विस्मितो लापा विभ्रमेषु कृतक्षणाः ॥ १९.७०२ ॥

तल्लीलानुकृतौ यत्नस्तत्कथाश्रवणे रसः ।

तत्स्वैरभाषणे हर्षः कोऽप्यभूद्गोपयोषिताम् ॥ १९.७०३ ॥

तासामकृतकस्मेरस्फुरिताधरपल्लवम् ।

मुग्धानां वदनं प्रीत्यै बभूवाभ्यधिकं हरेः ॥ १९.७०४ ॥

यद्गुरूणामनायत्तायत्तास्त्यक्तगृहक्रियाः ।

द्वेषिण्यः स्वजने यच्च तत्कृष्णास्यविजृम्भितम् ॥ १९.७०५ ॥

सलज्जा अपि मानिन्यः प्रकटस्मरविक्रियाः ।

तन्व्योऽपि तनुतां प्रापुस्तास्तदर्पितमानसाः ॥ १९.७०६ ॥

कम्पस्वेदवती कस्मादकस्मात्सखि मूर्छिता ।

अपि कृष्णभुजङ्गेन न दष्टासि प्रमादिनी ॥ १९.७०७ ॥

नायं तव गृहे मार्गो मार्गोऽयं विजने वने ।

यमुनातीरवानीरवल्लरीकेलिवेश्मनः ॥ १९.७०८ ॥

अमुष्मिन्कुसुमारामे कृष्णषट्चरणेन किम् ।

कृतव्रणा त्वमधरे येनासि विनतानना ॥ १९.७०९ ॥

गायन्ति यदि कृष्णस्य चरितं गोपकन्यकाः ।

त्वं न स्मरसि किं मूढे स्रस्तं शीलमिवांशुकम् ॥ १९.७१० ॥

दामोदरमतास्मीति मदान्धे किं न पस्यसि ।

स कान्ताशतसंकेतसक्तो हि बहुवल्लभः ॥ १९.७११ ॥

किं नु नाम स्तनौ तन्वि सोत्कम्पौ विनिगूहसे ।

पुलकाङ्कपोलस्य वदनस्य करोषि किम् ॥ १९.७१२ ॥

इयमिन्दीवरश्यामा श्यामा कुसुमहासिनी ।

कृष्णश्च गूढसंचारी चरस्येकाकिनी कथम् ॥ १९.७१३ ॥

इति गोपाङ्गनाः सेर्ष्यं संभोगसुभगा मिथः ।

व्याहरन्ति स्म सासूयं स्वैरं स्मरशरातुराः ॥ १९.७१४ ॥

कान्ताकररुहालूनबालवञ्जुलपल्लवम् ।

रतिशय्यारसे शैरेवर्बभूव विललं वनम् ॥ १९.७१५ ॥

तस्य कान्ततरं कान्ताः समदाः संमदाकुलम् ।

वदनं वदनोदारा घूर्णमानेक्षणाः पपुः ॥ १९.७१६ ॥

तासामभिसरन्तीनामवशं केशवं प्रति ।

पेतुः शशाङ्के सासूया दृशो दर्शनशङ्कया ॥ १९.७१७ ॥

माधवे मधुरोदारसुन्दरीरतितत्परे ।

सफलं धन्यमात्मानं मन्ये मेने मनोभवः ॥ १९.७१८ ॥

अहो नु जयिनी शक्तिः समरस्य स्मयकारिणी ।

प्रजापतिगुरौ यस्याः संपूर्णप्रणया गतिः ॥ १९.७१९ ॥

▪ ▪ ▪ ▪ ▪ गोपीसंक्रीडनम् ॥ २२ ॥ *****

ततः कदाचिल्ललनाकेलिशालिनि केशवे ।

अदृश्यत प्रदोषान्ते दैत्यो मत्तवृषाकृतिः ॥ १९.७२० ॥

अरिष्टो दुष्टचरितस्तीक्ष्णशृङ्गोऽरुणेक्षणः ।

पुञ्जीकृतः शशिकरैस्तमःकूट इवासितः ॥ १९.७२१ ॥

भाययन्वृषभान्भीमो भेरीगम्भीरनिःस्वनः ।

नीलशैलशिलापीठकाठोरस्कन्धबन्धुरः ॥ १९.७२२ ॥

प्रहाराभिमुखं कृष्णकुक्षिनिक्षिप्तचक्षुषः ।

तस्य शृङ्गयुगं लेभे कालतोरणतुल्यताम् ॥ १९.७२३ ॥

प्रहारिणं मदोदग्रं जग्राहोग्रं तमच्युतः ।

खलं मूर्खं नवैश्वर्यं प्रियवादीव वञ्चकः ॥ १९.७२४ ॥

गृहीतस्तेन बलिना बलदेवानुजेन सः ।

बभूवोद्भ्रान्तसावेगपुच्छोद्धुतरजःपटः ॥ १९.७२५ ॥

तस्यान्दोलिवक्त्रस्य घोरहुंकारकारिणः ।

व्यालघ्ना सङ्गमालेव स्फारफेनावली गले ॥ १९.७२६ ॥

ततः कण्ठं निपीड्यास्य धृत्वा मूर्ध्नि पदं जवात् ।

शृङ्गमेकं समुत्पाट्य जघान वदने हरिः ॥ १९.७२७ ॥

स तीक्ष्णशृङ्गाभिहतः पपात भुवि दानवः ।

प्रस्त्यानरुधिरोद्गारविचलद्घर्घरारवः ॥ १९.७२८ ॥

▪ ▪ ▪ ▪ ▪ अरिष्टवधः ॥ २३ ॥ *****

अरिष्टे निहते तस्मिन्नरिष्टे त्रिदिवौकसाम् ।

प्रभावः पप्रथे शैरेर्मथुराधिपतेः पुरः ॥ १९.७२९ ॥

स वृष्णिवृद्धान्विबुधान्वसुदेवपुरोगमम् ।

उग्रसेनं च पितरं दार्दिक्याक्रूरसात्यकान् ॥ १९.७३० ॥

अचिन्त्यत्समानाय्य निश्चयं नयकोविदान् ।

निःशब्दजनसंचारे निशीथे व्यस्तसेवकः ॥ १९.७३१ ॥

प्रदीपप्रतिबिम्बाङ्करत्नाभरणतेजसा ।

गूढचिन्तानलज्वालं बहिः प्रकटयन्निव ॥ १९.७३२ ॥

सोऽब्रवीत्क्षणमालोक्य वदनान्यभिमानिनाम् ।

दीर्घोच्छ्वासेन कथयन्नवं वैरिपराभवम् ॥ १९.७३३ ॥

इयं प्रथितसाराणां विदुषां सत्वशालिनाम् ।

सूच्यते भवतामग्रे मानग्लानिकदर्थना ॥ १९.७३४ ॥

प्रमादादवलेपाद्वा विस्मृतेनाल्पकेन नः ।

चूडामणिषु विन्यस्तं चरणप्रभवं रजः ॥ १९.७३५ ॥

न सहन्ते सुरगुरोर्ये साम्यं गुरुकोविदाः ।

स्पर्धया बत लज्जन्ते युधि वज्रायुधेन ये ॥ १९.७३६ ॥

ते यूयं यस्य सचिवः सचिवारोपितश्रियः ।

तस्य का नाम गणना गणनाथेऽपि जायते ॥ १९.७३७ ॥

अवज्ञोपेक्षितस्यायं विपाकः शत्रुजन्मनः ।

वयमप्यधुना येन याताश्चिन्ताविधेयताम् ॥ १९.७३८ ॥

श्रूयते नन्दगोपस्य प्रवृद्धचरितः शिशुः ।

दैत्यानामपि यः शङ्के शङ्कतङ्कगुरुर्नवः ॥ १९.७३९ ॥

विन्यस्य चरणं येन मूर्ध्नि कालियभिगिनः ।

स्ववींकृतानि शूराणां शिरांसि च यशांसि च ॥ १९.७४० ॥

साग्रजेन हतास्तेन प्रलम्बारिष्टधेनुकाः ।

अवज्ञास्पदमेवाभूद्येषां शक्रोऽपि संगरे ॥ १९.७४१ ॥

गिरिर्गोवर्धनो नाम सप्ताहं पाणिना धृतः ।

स्मयाय दुर्निमित्ताय नाशाय च न कस्य सः ॥ १९.७४२ ॥

न जानीमः स किं तावद्भूतमत्यद्भुतं क्षितौ ।

समुद्भूतमधो येन नीयते नः पराक्रमः ॥ १९.७४३ ॥

तस्मान्मनीषिभिर्वीरैर्भवद्भिश्चिन्त्यतमयम् ।

यशःकुसुमवल्लीनां परशुर्व्यसनोदयः ॥ १९.७४४ ॥

उक्तं च नारदेनैतत्पुनरेत्य पुरा स्वयम् ।

वसुदेवसुतः कृष्णो नन्दगोपगृहे स्थितः ॥ १९.७४५ ॥

नन्दगोपसुता चासौ शिलायामाहता त्वया ।

सा गत्वा विन्ध्यगहनं पुलिन्दशबरार्चिता ॥ १९.७४६ ॥

निशुम्भशुम्भौ दितिजौ जघान घनविक्रमौ ।

विहितो वसुदेवेन गर्भयोर्व्यत्ययस्तयोः ॥ १९.७४७ ॥

कृष्णः स ते भयस्थानमित्युक्त्वा नारदो ययौ ।

सोऽयं बन्धुः कृतघ्नो मे वसुदेवः स्थितोऽन्तिके ॥ १९.७४८ ॥

येन नः क्षयसंदेहतुलामारोपितं यशः ।

नरकावर्तकलिला यस्य किल्बिषविप्रुषः ॥ १९.७४९ ॥

स कृतघ्नोऽधमः केन पातकेनोपमीयते ।

घोरहालाहलापूर्णः कुटिलोऽयं मया स्वयम् ॥ १९.७५० ॥

धृतः सर्पो निजगृहे येनाप्तः सत्कुले कलिः ।

मिथ्या धवलकूर्चोऽयं बन्धुच्छद्मा जडो रिपुः ॥ १९.७५१ ॥

वसुदेवः सदा जिह्मो वधार्हेऽप्येष रक्षितः ।

सर्वाभिशङ्किता राज्ञां सुनयज्ञैरुदाहृता ॥ १९.७५२ ॥

अतः संचिन्त्यते डिम्बो न तु मे गणनास्पदम् ।

जगद्ग्रसगरिष्ठस्य सत्प्रतापहविर्भुजः ॥ १९.७५३ ॥

अन्तेर न भवत्येव शिशुर्गोपपतङ्गकः ।

अथवा वर्तते साधुर्यद्यस्मान्प्रति साग्रजः ॥ १९.७५४ ॥

का क्षतिर्भोगभागी मे बन्धुमध्ये भविष्यति ।

अक्रूरो मद्गिरा यातु व्रजं दानपतिः स्वयम् ॥ १९.७५५ ॥

एतेन तौ समाहूतौ द्रष्टुमिच्छामि दारकौ ।

नन्दगोपप्रभृतयः करदा मम शासनात् ॥ १९.७५६ ॥

धनुर्मखे समायान्तु प्रस्तुताधिकदायिनः ।

वीराणां हर्षजननौ कृष्णसंकर्षणौ च तौ ॥ १९.७५७ ॥

मल्लाभ्यां युध्यमानौ मे रङ्गे प्रीततिं करिष्यतः ।

इति दिव्यदृशाक्रूरः श्रुत्वा कंसेन भाषितम् ॥ १९.७५८ ॥

ययौ यादवशार्दूलः शौरिदर्सनलालसः ।

अक्रूरे गोव्रजं याते वृद्धास्ते वृष्णिपुंगवाः ॥ १९.७५९ ॥

निन्दया वुसुदेवस्य क्रुद्धास्तस्थुरधोमुखाः ।

ततः पितामहः कंसं पितामह इवापरः ॥ १९.७६० ॥

अभ्यधादन्धकोऽपीमान्दुर्जयः प्रतिबन्धकः ।

वन्ध्याः कुलेऽपि सततं मयन्ये धन्यतराः स्त्रियः ॥ १९.७६१ ॥

न कुलघ्नः सुतो यासां कदाचिदपि जायते ।

न जातु वज्रजिह्वेषु तीक्ष्णेषु क्रूरकारिषु ॥ १९.७६२ ॥

सुधालया तिष्ठति श्रीः कमलाङ्कुरकोमला ।

अहो नु शोच्यतां याताश्चिराद्यादववृष्णयः ॥ १९.७६३ ॥

वृद्धावमानकृद्बालो येषां कंस त्वमग्रणीः ।

क एवं नाम जडधीरनुन्मत्तः प्रभाषते ॥ १९.७६४ ॥

रक्षितो वसुदेवेन पित्रा पुत्रः किमप्यहो ।

नेह पुत्रात्प्रियतरं किंचिदस्ति शरीरिणाम् ॥ १९.७६५ ॥

पुत्र स्वजनकं पृच्छ पुत्रस्नेहस्य गौरवम् ।

परलोकपरित्राणां पित्रा चेद्रक्षितः सुतः ॥ १९.७६६ ॥

तस्यास्य वाच्यता केयं यूयं सर्वेऽपि पुत्रिणः ।

वसुदेवात्मजो वीरः कृष्णः संकर्षणानुजः ॥ १९.७६७ ॥

बन्धुबुद्ध्या प्रणयिना संधेयः सर्वथा त्वया ।

हितं पथ्यं च मे मोहान्न करिष्यसि चेद्वचः ॥ १९.७६८ ॥

तदैश्वर्यप्रभावोऽद्य संपूर्णावधिरेष ते ।

दृश्यन्ते क्षयसंसिन्यो दुर्निमित्तपरम्पराः ॥ १९.७६९ ॥

अन्यत्र कृष्णसंधानात्तासु शान्तिर्न ते परा ।

इत्यन्धकवचः श्रुत्वा निःश्वसन्भ्रकुटीमुखः ॥ १९.७७० ॥

निर्जगाम ततः कंसः पराङ्मुख इव श्रियः ।

नायमस्तीति वृद्धेषु भाषमाणेषु वृष्णिषु ॥ १९.७७१ ॥

आदिदेशाशु श्वेताङ्गं कंसः केशितुरङ्गमम् ।

स कृष्णनिधनायोग्रः प्रेरितस्तेन दानवः ॥ १९.७७२ ॥

जगाम गोव्रजं घोरसंध्यासृक्संप्लुतेऽहनि ।

स कोपाद्रुधिरेणेव पूरिताक्षः श्वसन्मुहुः ॥ १९.७७३ ॥

उरःस्थलमिलत्प्रोथःकुञ्चितोरुशिरोधरः ।

वज्रसारस्वुराघातनिर्दारितशिलातलः ॥ १९.७७४ ॥

विस्फारकेसरसटाकरालस्कन्धकन्धरः ।

घट्टयन्निव हेषाभिः पिबन्निव दिशो दश ॥ १९.७७५ ॥

निर्मांसचर्वणास्वादप्रस्रवत्सृक्विशोणितः ।

कृतान्तचामराकारवलितोद्धूतवलधिः ॥ १९.७७६ ॥

विवृत्ताननविस्पष्टनिर्यद्दन्तांशुमण्डलः ।

दिक्षु मानुषमांसादः क्षिपन्नस्थिचयानिव ॥ १९.७७७ ॥

सोऽभिदुद्राव वेगेन कृष्णमापाण्डुरच्छविः ।

पवनाप्रेरितस्फारः शरन्मेघ इवाचलम् ॥ १९.७७८ ॥

समुत्क्षिप्ताग्रचरणं केशवः केशिनं पुरः ।

दृष्ट्वा निवार्यमाणोऽपि गौपैः क्रोधात्तमाद्रवत् ॥ १९.७७९ ॥

खुराभ्यां कृतशल्याभ्यां बलाद्वक्षसि ताडितः ।

घोरहेषारवोग्रेण तेन नाकम्पताच्युतः ॥ १९.७८० ॥

केसराधूननोद्धूतरजसस्तस्य वल्गितैः ।

बभूवुः ककुभश्छन्ना धूमकेतुशतैरिव ॥ १९.७८१ ॥

तस्य प्रहारतो वक्त्रकुहरे विवरे हरिः ।

दारुणे दारुणायेव द्विगुणं भुजमाददे ॥ १९.७८२ ॥

केशिदन्तान्तरासक्तः स रराज हरेर्भुजः ।

फेनावलीपरिक्षिप्तः पारिजात इवार्णवे ॥ १९.७८३ ॥

केशीशैलशिलास्तम्भदृढे दोष्णि मुरद्विषः ।

भग्नदन्तश्चिरं चक्रे वक्त्राञ्जनकदर्थनाः ॥ १९.७८४ ॥

प्रस्रवत्सवेदसलिलः स्रोतः प्रोद्धान्तशोणितः ।

व्यावृत्तनयनः केशी निःश्वसन्निश्चलोऽभवत् ॥ १९.७८५ ॥

स्फारिते दोष्णि कृष्णेन गण्डकूटतटान्तरे ।

स्फुटस्थूलास्थिटाङ्कारं तद्वक्त्रमभवद्द्विधा ॥ १९.७८६ ॥

स दामोदरदुर्वारदोर्दण्डदलिताकृतिः ।

पपात रुधिरोद्गारघोरस्तुरगदानवः ॥ १९.७८७ ॥

- ▪ ▪ ▪ ▪ ▪ केशिवधः ॥ २४ ॥ *****

हते केशिनि कंसस्य प्रिये सुहृदि दानवे ।

भुवनेष्वभवत्कोऽपि हर्षोत्साहमहोत्सवः ॥ १९.७८८ ॥

अन्तर्हितो मुनिः प्रीत्या नारदः कृष्णमब्रवीत् ।

साधु माधव निःशल्यं त्वाया कृत्मिदं जगत् ॥ १९.७८९ ॥

केशिनिर्दारणात्स्वयातः केशवस्त्वं भविष्यसि ।

इत्युक्त्वा प्रययौ हर्षान्नारदोऽभिमतां दिशम् ॥ १९.७९० ॥

प्रादुरासीत्ततः शौरेर्निमित्तनिचयः शुभः ।

बन्धुना पितृतुल्येन यः शंसति समागमम् ॥ १९.७९१ ॥

मेरुपार्श्वान्तरं प्रायाद्दिनान्ते वासरेश्वरः ।

कृष्णकेशिवधाश्चर्यकथां वक्तुमिवादरात् ॥ १९.७९२ ॥

ततः पीतांशुकोदारदामोदरमनोहरम् ।

बभूव सहजश्यामं संध्यांशुशबलं नभः ॥ १९.७९३ ॥

शनैः संघट्टिताः श्यामास्तमोभिरभवद्दिशः ।

तारकांशुस्रुतक्षीरा गोपालैरिव धेनवः ॥ १९.७९४ ॥

व्योमाब्धिपाञ्चजन्योऽथ निशानाथः समुद्ययौ ।

यामिनीकामिनीकेलिमण्डनो मणिदर्पणः ॥ १९.७९५ ॥

शशाङ्ककरसारेण विहारेण सुरश्रियः ।

तमसः परिहारेण हारैणैव नभो बभौ ॥ १९.७९६ ॥

नेत्रप्रेम्णि सुधासीम्नि सितिम्नि व्योम्नि गाढताम् ।

यशसीवाश्रिते शौरेर्निशाकरकरच्छलात् ॥ १९.७९७ ॥

प्रहर्षयन्नीलकण्ठान्रथेन घननादिना ।

शेखरो वृष्णिवीराणामक्रूरः प्रत्यपद्यत ॥ १९.७९८ ॥

नन्दगोपस्य सदनं स समासाद्य गोकुले ।

ददर्श शतपत्राक्षं कृष्णं केशिनिसूदनम् ॥ १९.७९९ ॥

अयं स कैटभारातिर्भगवान्मधुसूदनः ।

भुवो भारावताराय जातो यादवनन्दनः ॥ १९.८०० ॥

श्रीवत्सलक्षणो वक्षो बिभ्राणः कुस्तुभोचितम् ।

निःस्पन्दालिङ्गने योग्यं कमलाकुचकुम्भयोः ॥ १९.८०१ ॥

मेघश्यामेन वपुषा नयनामृतवर्षिणा ।

धत्ते सौदामिनीदामरम्यं पीतांशुकद्वयम् ॥ १९.८०२ ॥

अनेन नृत्यति मनःस्फारं प्रसरतो दृशौ ।

एतदालिङ्गनायेव भुजौ मे परिधावतः ॥ १९.८०३ ॥

एहि माधव कृष्णेति व्याहरन्प्रीतिनिर्भरः ।

पूजितो नन्दगोपेन कृष्णेन च विवेश सः ॥ १९.८०४ ॥

प्राप्तपूजासनः सोऽथ ससंकर्षणमच्युतम् ।

उवाच पुण्डरीकाक्षमापिबन्निव चक्षुषा ॥ १९.८०५ ॥

इयं ते धीरगम्भीरा हर्षपीयूषवर्षिणी ।

प्रयाति ना पुण्यवतां मूर्तिर्लोचनगोचरम् ॥ १९.८०६ ॥

मोहात्त्वद्भक्तिविमुखस्त्वां दृष्ट्वा प्रातरागतम् ।

वाञ्छितः कृतकृत्यश्च भविता मथुरेश्वरः ॥ १९.८०७ ॥

द्रष्टुमिच्छति कंसस्त्वां प्रातर्गन्तासि तत्पुरीम् ।

त्वद्वपुः पूर्णपूण्येन धन्याः पश्यन्तु यादवाः ॥ १९.८०८ ॥

तत्र कंसस्य संभारधनाधाम्नि धनुर्महीम् ।

उपतिष्ठन्तु धनिनः सर्वे गोपाः करप्रदाः ॥ १९.८०९ ॥

एतावदेव प्रचुरं ममागमनकारणम् ।

इदं तु बान्धवस्नोहाद्यत्किंचिदभिधीयते ॥ १९.८१० ॥

वृद्धः स सुकृती तत्र पुत्र पुत्रवतां वरः ।

विलोक्य वसुदेवस्त्वां फलं प्राप्नोतु जन्मनः ॥ १९.८११ ॥

त्वत्कृते सततं यस्य कंसवाक्यशराः स्वराः ।

त्वामवाप्नोतु माहात्म्यं रोहणाद्रिवसुंधरा ॥ १९.८१२ ॥

अपि कंसभयात्पुत्रैरसंपीतपयोधरा ।

कृष्णेति नाम्ना सततं सीदति प्रस्नुस्तनी ॥ १९.८१३ ॥

गूढचिन्ताविनिःश्वासधूसराधरपल्लवा ।

दूरीकृतसुतस्नेहवैक्लव्याप्तविपल्लवाम् ॥ १९.८१४ ॥

रहितामिव रामेण कौसल्यां कुलमौलिना ।

दर्शनामृतवर्षेण निर्वापय समेत्य ताम् ॥ १९.८१५ ॥

अहो तृष्णेव सहजाच्छायेव सहचारिणी ।

वासनेवापरिक्षीणा सर्वथा भवितव्यता ॥ १९.८१६ ॥

विश्वोद्धरणदक्षस्य जगद्रक्षाशिखामणेः ।

तवापि जन्म सवुधाचिन्तया यत्प्रशुष्यति ॥ १९.८१७ ॥

कंसनिर्भर्त्सनानम्रस्त्वां प्राप्य जनकश्चिरात् ।

वहतु त्रिजगत्पूज्य पुत्र मानोन्नतं शिरः ॥ १९.८१८ ॥

- - - - - अक्रूरसंदेशः ॥ २५ ॥ *****

इत्युक्ते दानपतिना स्नेहवात्सल्यशालिना ।

सर्वं करोमीति वदन्निर्विकाराननोऽभवत् ॥ १९.८१९ ॥

गन्तुं कृताभ्युपगमे कृष्णे गोपमृगीदृशाम् ।

चिन्तासंतप्तनिःश्वासैरिवेन्दुर्म्लानतां ययौ ॥ १९.८२० ॥

दुग्धा निशीथवत्सेन ज्योत्स्ना पूरपयस्विनी ।

प्रातर्द्यौः सांध्यरागेण कपिला गौरिवाबभौ ॥ १९.८२१ ॥

अथोदयाचलशिरोरत्नतामागते रवौ ।

उद्यत्प्रदीप्तचक्रस्य शोभां लेभे हरेर्नभः ॥ १९.८२२ ॥

करोपनयसंपूर्णैः शकटैरथ भूरिभिः ।

गन्तुमभ्युद्ययुर्गोपपतयः कंसशासनात् ॥ १९.८२३ ॥

रथैः प्रययुरक्रूररौहिणेयाच्युतादयः ।

अर्घ्यमाना इवोत्तालगोपालीलोचनोत्पलैः ॥ १९.८२४ ॥

अवाप्य यमुनातीरमक्रूरः कृष्णमब्रवीत् ।

अस्मिन्ह्रदे भोगिवृते कृष्ण शेषं फणीश्वरम् ॥ १९.८२५ ॥

निमज्ज्य भगवन्मन्त्रैः पूजयाम्यमृताशनः ।

इत्युक्त्वा कृष्णनिक्षिप्तरथस्तत्र ममज्ज सः ॥ १९.८२६ ॥

निमग्नः सोऽथ पातालं दिव्यखस्तिकलाञ्छनम् ।

शेषं सहस्रमूर्धानं ददर्शासीनमीश्वरम् ॥ १९.८२७ ॥

हेमाब्जमालाभरणं सर्वरत्नाभूषितम् ।

सहस्रशिखरस्फारतुषारगिरिविभ्रमम् ॥ १९.८२८ ॥

आसेव्यमानं प्रणतैर्निखिलैः कुलभोगिभिः ।

नीलाम्बरं नालकेतुं हलिनं मुसलायुधम् ॥ १९.८२९ ॥

उत्सङ्गे तस्य कृष्णं च शीतांशोरिव लाञ्छनम् ।

निषण्णं विस्मितोऽपश्यज्जपन्ब्रह्म सनातनम् ॥ १९.८३० ॥

रौहिणेयाच्युतौ मत्वा तावेवोन्मज्जय सत्वरः ।

दृष्ट्वा रथस्थौ तावेव ममज्ज पुनरादरात् ॥ १९.८३१ ॥

पुनस्तथैव तौ दृष्ट्वा समुन्मज्ज्यास्तसंशयः ।

त्वमेव सर्वमित्यूचे पृष्टः कृष्णेन सस्मितम् ॥ १९.८३२ ॥

▪ ▪ ▪ ▪ ▪ ह्रददर्शनम् ॥ २६ ॥ *****

दिनान्ते प्राप्य मथुरामक्रूरः स्वगृहान्तरे ।

स्वैरं जगाद गोविन्दं कंसदुर्नयशङ्कितः ॥ १९.८३३ ॥

वसुदेवगृहं तात न गन्तव्यं त्वयाधुना ।

न च रामेण नितरां कंसादाप्नोति भर्त्सनाम् ॥ १९.८३४ ॥

इत्युक्ते दानपतिना कृष्णः सस्मितमब्रवीत् ।

सत्यं तत्र न गच्छावः पश्यावः कौतुकात्पुरीम् ॥ १९.८३५ ॥

इत्याभाष्य मदोदारौ रामकृष्णौ विचेरतुः ।

अवतीर्णौ विमानाभ्यां वीरौ विद्याधराविव ॥ १९.८३६ ॥

तौ राजरजकं प्राप्य ययाचाते महाभुजौ ।

वासांसि रुचिराभांसि न ददावधमश्च सः ॥ १९.८३७ ॥

क्रोधदर्पावलिप्तं तं रजकं क्रूरवादिनम् ।

हत्वा जहार वासांसि बलदेवानुजो बलात् ॥ १९.८३८ ॥

स्वयं माल्योपनयनं मालाकारी वलीमती ।

श्रीपतेः श्रीप्रदं प्रादात्प्रीत्या प्रणयवादिनी ॥ १९.८३९ ॥

क्रमेण लीलया कृष्णः सुस्पष्टावयवां क्षणात् ।

तां चक्रे यौवनोद्यानपूर्णलावण्यवल्लरीम् ॥ १९.८४० ॥

ततः प्राप्यायुधागारं पूजितं दैत्यदानवैः ।

उत्साहार्हं शिलास्तम्भसारं ददृशतुर्धनुः ॥ १९.८४१ ॥

दामोदरस्तदादाय दोर्भ्यामाकृष्य दुर्धरम् ।

बभञ्ज स्फारिटाङ्कारं मृणालीनाललीलया ॥ १९.८४२ ॥

तेन शब्देन पवनस्कन्धसंघट्टकारिणा ।

रराास दारितेव द्यौश्चकम्पे च वसुंधरा ॥ १९.८४३ ॥

आयुधागारिकोऽप्याशु धनुर्भङ्गं न्यवेदयत् ।

कंसायाकम्पितमनाश्चक्रे दर्पात्स चाश्रुतम् ॥ १९.८४४ ॥

भग्नं केनापि मल्लेन श्रुत्वा चापं नरेश्वरः ।

दिदेश सर्वमल्लानां युद्धप्रेक्षामहोत्सवम् ॥ १९.८४५ ॥

स्वैरं ततः समाहूय मल्लौ चाणूरमौष्टिकौ ।

चिरसंधारितौ चक्रे वधसज्जौ मुरद्विषः ॥ १९.८४६ ॥

गजशालाधिपं कंसः संग्रामसचिवं रहः ।

ऊचे मोहेऽपि संप्राप्तसुकृतः शौरिचिन्तया ॥ १९.८४७ ॥

प्रातर्धनुर्महीरङ्गमागन्ता वसुदेवजः ।

साग्रजो दर्पसंमत्तो मत्तः स वधर्महति ॥ १९.८४८ ॥

रङ्गद्वारि त्वया चासौ निर्घाती व्यालकुञ्जरः ।

कार्यः कुवलयापीडः क्रोधात्तन्निधनोद्यतः ॥ १९.८४९ ॥

हतपुत्रं करोम्येव वसुदेवं निरंशकम् ।

बन्धुच्छद्मप्रतिच्छन्नान्नृपांश्चान्धकयादवान् ॥ १९.८५० ॥

पुरा ममार्तववती जननी नवकौतुकात् ।

प्रियासनादिकटके चचार कुसुमोज्ज्वले ॥ १९.८५१ ॥

तत्र वालानिलोल्लासवेल्लिताशोकपल्लवे ।

स्फूर्जद्बकुलकिञ्जल्कपिञ्जरीकृतषट्पदे ॥ १९.८५२ ॥

पुञ्जीकृतलताकुञ्जमञ्जुगुञ्जद्विहङ्गमे ।

रतिरागरसोदारस्मरसंजीवने वने ॥ १९.८५३ ॥

ददर्श तां सौरपतिर्द्रुमिलो दानवेश्वरः ।

लतां स्तनस्तबकिनीं कामकल्पतरोरिव ॥ १९.८५४ ॥

मयो योगीश्वरः सोऽथ रूपं कृत्वा पितुर्मम ।

भेजे तां मन्मथाविष्टः सतीं प्रेमनिरर्गलाम् ॥ १९.८५५ ॥

ततः सा वृत्तकर्तव्या शङ्किता वीक्ष्य दानवम् ।

पापं शशाप कुपिता दूषितास्मीति दुःखिता ॥ १९.८५६ ॥

वधं प्राप्स्यसि दुर्वृत्त मद्भर्तृकुलजाद्युधि ।

अयं च मम गर्भेऽद्य त्वया यस्तनयो धृतः ॥ १९.८५७ ॥

इत्युक्त्वा शनकैः प्रायादिति मामाह नारदः ।

तस्मादहं दैत्यपतेर्द्रुमिलस्यात्मजो मतः ॥ १९.८५८ ॥

सुतोऽहं नोग्रसेनस्य यादवा मे न बान्धवाः ।

ते हिर्वे ममोच्छेद्याः कृष्णोत्साहप्रतीक्षिणः ॥ १९.८५९ ॥

संदिश्येति महामात्यं संक्लृप्तमपेऽहनि ।

संगतप्रेक्षकं रङ्गं विवेश विषदांशुकः ॥ १९.८६० ॥

वलभीतुङ्गरत्नांशुंतरङ्गालिङ्गिताम्बरे ।

संगतानन्तसामन्तसमागमनिरन्तेर ॥ १९.८६१ ॥

भोजवृष्ण्यन्धकैस्तत्र वीरैः परिवृतो बभौ ।

हेमसिंहासनासीनः पीनांसः कंसभूपतिः ॥ १९.८६२ ॥

मोलिकुण्डलकेयूररत्नांशुशबलद्युतिः ।

कान्ताभिश्चामरप्रान्तकम्पितोष्णीषपल्लवः ॥ १९.८६३ ॥

नानादेशागतास्तस्य शासनादथ दुर्मदाः ।

समुत्पेतुर्महामल्ला भुजास्फालनशालिनः ॥ १९.८६४ ॥

संकर्षणाच्युतौ वीरौ नीलपीताम्बरौ ततः ।

सितासितघनच्छायौ रङ्गद्वारमवापतुः ॥ १९.८६५ ॥

गात्रैः कुवालयापीडाकारिणं तत्र गौरवात् ।

पुनः कुवलयीपीडं सज्जं ददृशतुर्गजम् ॥ १९.८६६ ॥

भोगीन्द्राभोगसंभ्रान्तिकरं कज्जलमेचकम् ।

कालकूटच्छटाटोपनिर्दग्धमिव मन्दिरम् ॥ १९.८६७ ॥

आधोरणेन दुर्वारदर्पप्रेरितमोजसा ।

तं युद्धसंमुखं दृष्ट्वा दन्ताघातक्षताचलम् ॥ १९.८६८ ॥

पुनः कुण्डलितोद्दण्डघोरशुण्डालमण्डलम् ।

त्रैलोक्यकवलीकारविकरालमिवान्तकम् ॥ १९.८६९ ॥

मण्डलानि चरन्कृष्णः सव्यदक्षिणपार्शवयोः ।

स्वसहस्तालम्बनं कुर्वन्वेगेन तममोहयत् ॥ १९.८७० ॥

आघताकुलितः सोऽथ विवलत्पर्वताकृतिः ।

प्रवृद्धश्रमशूत्कारशीकरापुरिताम्बरः ॥ १९.८७१ ॥

दन्ताभिघावैफल्याज्जानुभ्यामवनिं गतः ।

सहसोत्थाय गोविन्दं लघुचित्रपराक्रमम् ॥ १९.८७२ ॥

चरन्तं करदन्ताग्रचरणाभ्यन्तरेऽपि सः ।

न प्राप कृतयत्नोऽपि भाग्यहीन इवोप्सितम् ॥ १९.८७३ ॥

हरिर्ददत्सुकटकं दत्वास्य चरणं मुखे ।

संग्रामतोरणस्तम्भं पाणिभ्यां दन्तमग्रहीत् ॥ १९.८७४ ॥

कंसश्रीनलिनीमूलमिवोत्पाट्य द्विपाननात् ।

तीक्ष्णाग्रं दन्तमुसलं तेनैव निजघान तम् ॥ १९.८७५ ॥

निजदन्तप्रहारेण रक्तोद्गारी विदारितः ।

हस्ती स्रुतशकृन्मूत्रश्चचालाचलसंनिभः ॥ १९.८७६ ॥

आकृष्टपृच्छो रामेण हतारोहः स शौरिणा ।

दन्तनिर्दारितकटः पपात विकटः क्षितौ ॥ १९.८७७ ॥

▪ ▪ ▪ ▪ ▪ कुवलयापीडवधः ॥ २७ ॥ *****

हत्वा कुवलयापीडं जगत्पीडाक्षयोद्यतः ।

रङ्गं विवेश गोविन्दः कामिनीकौतुकप्रदः ॥ १९.८७८ ॥

गजरक्तच्छटाङ्कस्य लीलावल्गितवाससः ।

रूपं तस्य बभौ रङ्गे मेघस्येव सविद्युतः ॥ १९.८७९ ॥

दन्तिदन्तः स शुशुभे करे कालियविद्विषः ।

अष्टमीशीतकिरणः प्रभादीप्त इवाम्बरे ॥ १९.८८० ॥

ततः कंसाज्ञया मल्लो बलवानन्ध्रदेशजः ।

चाणूरः पर्वताकारस्तत्र कृष्णमयोधयत् ॥ १९.८८१ ॥

तयोर्जानुभुजाबन्धैः प्रेरणाकर्षणाच्चनैः ।

पीडनास्फालनाघातैः पृथिवी समकम्पतः ॥ १९.८८२ ॥

पुत्रः पीयूषवर्षीति हर्षबाष्पार्द्रचक्षुषा ।

सकम्पं वसुदेवेन मात्रा च जयसंश्रये ॥ १९.८८३ ॥

श्रीकान्त इत्यप्सरोभिर्दैत्यच्छेदीति खेचरैः ।

बन्धुरित्यादराद्गोपैः प्रवीर इति यादवैः ॥ १९.८८४ ॥

मल्लो वराकोऽस्य कियानिति संकर्षणेन च ।

तरस्वी वीक्ष्यमाणोऽसौ मल्लानां विस्मयं व्यधात् ॥ १९.८८५ ॥

ततः कोपाकुलः कंसः कृष्णोत्साहविवर्धनम् ।

भुजमुद्यम्य विपुलं तूर्यस्वनमवारयत् ॥ १९.८८६ ॥

उत्साहवाद्ये कंसेन कृष्णद्वेषान्निवारिते ।

देवदुन्दुभयो नेदुस्तारतूर्यरवैर्दिवि ॥ १९.८८७ ॥

मल्लं कृष्ण जहीत्याशु सप्तर्षिभिरुदीरिते ।

पपातोद्द्योतिताकाशः कंसस्य मुकुटान्मणिः ॥ १९.८८८ ॥

अथ दैत्यावतारस्य मल्लस्याद्भुतविक्रमः ।

मुष्टिप्रहारेण शिरश्चकार दलितेन्द्रियम् ॥ १९.८८९ ॥

तस्य स्फुटल्ललाटस्य लोचने दीपसंनिभे ।

निपेततुः क्षितितले तारायुगलशोभने ॥ १९.८९० ॥

ततो निपतिताशेषमल्ले मल्ले निपातिते ।

अभूत्क्षुब्धाब्धिगम्भीरो रङ्गक्षोभभवः स्वनः ॥ १९.८९१ ॥

संकर्षणोऽपि जग्राह मल्लं मण्डलकोविदः ।

मौष्टिकं नाम विकटं तामराख्यं च केशवः ॥ १९.८९२ ॥

जन्मावर्तं परिभ्राम्य तोमलं कालियान्तकः ।

पपात भुवि निष्पिष्य मौष्टिकं च हलायुधः ॥ १९.८९३ ॥

हतेषु तेषु मल्लेषु शल्येषु त्रिदिवौकसाम् ।

विस्मिते यादवकुले लुलिते रङ्गमण्डले ॥ १९.८९४ ॥

सुधासारैरिवासिक्ते वसुदेव वधूसखे ।

चुकोप भ्रुकुटीभीष्मः कंसः कम्पितमानसः ॥ १९.८९५ ॥

सावेगैस्तस्य निःश्वासैरिव प्रलयतां गते ।

कोपाग्नौ सर्वभूतानां घोरमाविरभूद्भयम् ॥ १९.८९६ ॥

तस्य गण्डतटे स्पष्टं खेदबिन्दुलता बभौ ।

लडत्कुण्डलसक्तेव बिम्बिता मौक्तिकावली ॥ १९.८९७ ॥

भ्रूभङ्गेन निवार्यैव रङ्गकोलाहलस्वनम् ।

वेत्रिप्रोत्सारितजनो जगाद जगतीपतिः ॥ १९.८९८ ॥

इयं सरलता जातु जाता सारक्षयाय नः ।

कथं प्रथितसाराणां मध्ये गोपः प्रदृश्यते ॥ १९.८९९ ॥

जम्बुकेन हताः सिंहा यदि तत्क्रियतेऽत्र किम् ।

निष्कास्यन्तामितो गोपा नन्दगोपश्च बध्यताम् ॥ १९.९०० ॥

बान्धवव्यसनश्चायं वसुदेवः कुलाधमः ।

निधीयतां क्षयमुखे स्वपक्षैः सह यादवैः ॥ १९.९०१ ॥

उग्रसेनसुतस्येति शासनादुग्रविक्रमः ।

समुद्ययुर्यथादिष्टं कर्तुं तन्मतिवर्तिनः ॥ १९.९०२ ॥

ततस्त्रासाकुलान्वीक्ष्य गोपान्गोप्ता दिवौकसाम् ।

देवीं च देवकीं पुत्रस्नेहवैक्लव्यविक्लवाम् ॥ १९.९०३ ॥

हेमसंहासनोपान्तमभिपत्य त्रिविक्रमः ।

जग्राह लोलमाल्येषु कंसं केशेषु केशवः ॥ १९.९०४ ॥

अग्रे दिग्भिरिव न्यस्तमवतीर्णमिवाम्बरात् ।

सहसा पतितं कृष्णं कंसः कालममन्यत ॥ १९.९०५ ॥

कृष्णेनाकृष्यमाणेषु माल्यवत्सु महीपतेः ।

केशेषु विललापेव राजश्रीर्भङ्गशिञ्जितैः ॥ १९.९०६ ॥

नाम्यमानाननः कंसः शौरिणा भारपीडिताम् ।

वधे निमित्ततां यातामालुलोके महीमिव ॥ १९.९०७ ॥

वक्त्राम्बररविर्लक्ष्मीविहारमणिपर्वतः ।

मौलिस्तस्यापतत्स्रस्तमुक्तास्रुकणसंततिः ॥ १९.९०८ ॥

तमाकृष्य स्फुटन्मुक्ताहारकेयूरकुण्डलम् ।

स्फारैश्वर्यादिव महाहेमसिंहासनाच्च्युतम् ॥ १९.९०९ ॥

रक्तकुट्टिमनिर्घृष्टगात्रप्रस्नुतशोणितम् ।

उत्ससर्ज विशीर्णासुं कंसं दूरे हरिर्व्यसुम् ।

अजितं सर्वभूपालैरभग्नं वज्रिसंगरे ॥ १९.९१० ॥

तं वीक्ष्य सर्वभूतानामवश्यं शौरिणा हतम् ।

रङ्गे समुदभूद्घोरः क्षणं हलहलारवः ॥ १९.९११ ॥

- 
- 
- 
- 
- कंसवधः ॥ २८ ॥ *****

तस्मिन्वीरकुलोत्तंसे हते कंसे मुरारिणा ।

कंसानुजं सुनामानं निजघान हलायुधः ॥ १९.९१२ ॥

देवोऽथ देवकीसूनुर्ववन्दे देववन्दितः ।

वसुदेवस्य पादाब्जो(ब्जे) मातुश्चानन्दनिर्भरः ॥ १९.९१३ ॥

सहसा हतमाकर्ण्य कंसं कंसवधूजनः ।

अकाण्डवज्रपातेन निर्दारित इवाययौ ॥ १९.९१४ ॥

तं पांसुरूषितं भूमौ सिंहाहतमिव द्विपम् ।

संवीक्ष्योन्मथितं वेगाद्वातेनेव महाद्रुमम् ॥ १९.९१५ ॥

क्रोशन्त्यस्तारकरुणं छिन्नहारविबूषणाः ।

विवेष्टन्त्यः क्षितितले जगदुस्तुं मृगीदृशः ॥ १९.९१६ ॥

हा नाथ ललनाकेलिकलनाकुसुमायुध ।

युधि प्रचण्डदोर्दण्डखण्डितारातिमण्डल ॥ १९.९१७ ॥

कथं प्रियासु विमुखः प्रेमप्रणयभूमिषु ।

भूमिमालिङ्ग्य सुप्तोऽसि भुभाभ्यां विस्मृतादरः ॥ १९.९१८ ॥

जरासंधितो वारिनाथरत्नापहारिणः ।

क्षतयक्षस्य ते वीरः वधः कथमनायुधः ॥ १९.९१९ ॥

ऐरावणविषाणाग्रविषमोल्लिखितोरसः ।

वधे तवापि भूपाल कथं न क्षुभितं जगत् ॥ १९.९२० ॥

अक्षौहिणीनां नाथस्य राजराजस्य ते कथम् ।

निजः परो वा संग्रामे नैकोऽपि निहतः पुरः ॥ १९.९२१ ॥

उदञ्चय दृशं देव विलोकय वधूजनम् ।

इयं कृतकनिद्रा वा कोपः प्रणयिनीषु वा ॥ १९.९२२ ॥

अयं निष्करुणः कोऽपि पुंसां पर्यन्तयात्रिकः ।

पन्थाः प्रतीक्ष्यते क्षिप्रं न यत्र दयितो जनः ॥ १९.९२३ ॥

इत्यन्तःपुरनारीषु विलपन्तीषु कम्पिता ।

आययौ कंसजननी सहसा शोकविक्लवा ॥ १९.९२४ ॥

उत्सङ्गे सा शिरः कृत्वा पुत्रस्य क्षितिशायिनः ।

बाष्पं दुर्धरमादाय शुशोचार्तप्रलापिनी ॥ १९.९२५ ॥

अहो नु त्वां नृशंसेन पुत्र कालेन निघ्नता ।

छिन्नः पितुस्ते वृद्धस्य जलाञ्जलिमनोरथः ॥ १९.९२६ ॥

एकाकी पांशुशयने महार्हशयनोचितः ।

कथं पृथग्जन इव स्थितोऽसि पृथिवीपते ॥ १९.९२७ ॥

ज्ञातिभ्यो दुःसहं पुंसां जायते नान्यतो भयम् ।

इति रक्षः सभासीनः सत्यमूचे दशाननः ॥ १९.९२८ ॥

स्वभुजोपार्जिता येन बन्धुसाधारणीकृता ।

लक्ष्मीः स त्वं हतः पुत्र ज्ञातिना ज्ञातिवत्सलः ॥ १९.९२९ ॥

इत्युक्त्वा नृपतिं वृद्धमुग्रसेनमुवाच सा ।

भर्तारं पुत्रशोकेन विषेणेवातिमूर्छितम् ॥ १९.९३० ॥

अयं ते तनयो राजन्बान्धवैः परिवर्जितः ।

हतश्चौर इवैकाकी संस्कारं याचतां हरिम् ॥ १९.९३१ ॥

राज्ये प्रवीरो भोजोऽस्मिन्नथवा माधवो विभुः ।

इयं श्रीः सततं राजन्वीरवक्त्रावलोकिनी ॥ १९.९३२ ॥

गच्छ विज्ञापय विभो कृष्णं यादवसंसदि ।

कंसोऽयं पृथिवीपालस्त्यज्यतामौर्ध्वदैहिके ॥ १९.९३३ ॥

कस्य नाम हते वैरं प्राणैः संशोधितागसि ।

त्यक्त्वा प्रयातः सर्वस्वं नोत्तिष्ठिति हतः पुनः ॥ १९.९३४ ॥

उग्रसेनो निशम्येति संध्यारक्तांशुमानिव ।

वसुदेवालयं प्रायाद्गले दष्ट इवाहिना ॥ १९.९३५ ॥

स बन्धुसहितः कृष्णं ददर्शावनताननः ।

स्वबन्धुनिधनध्यानपश्चात्तापाकुलाशयम् ॥ १९.९३६ ॥

तमब्रवीदुग्रसेनः क्रियतामुचितं त्वया ।

अपरिम्लानसद्वृत्तान्परिपालय यादवान् ॥ १९.९३७ ॥

त्वदाज्ञया करोम्येष क्रियां कंसस्य पश्चिमाम् ।

दत्वा जलाञ्जलिं चास्य भवामि विपिने मुनिः ॥ १९.९३८ ॥

प्राप्ते विधेर्नियोगेन वियोगे योगिनो नये ।

कानने कानने तेषां बाष्पमात्रोचिते प्रभा ॥ १९.९३९ ॥

तच्छ्रुत्वोवाच कंसारिः सकत्यमेतत्कुलोचितम् ।

सदृशं तव भूपाल श्रुतस्य चरितस्य च ॥ १९.९४० ॥

भवाभवपरिच्छेदरेखेयं भवितव्यता ।

जन्तोर्ललाटपाषाणलिखितेवाविनाशिनी ॥ १९.९४१ ॥

मा कृथाः शोकमधुना वृत्तेऽस्मिन्ननिवर्तिनि ।

काले कलितकालाग्रा न हि मुह्यन्ति धीधनाः ॥ १९.९४२ ॥

सत्क्रियां भजतां कंसो राज्यं च भजतां भवान् ।

राज्यार्थिनो न हि वयं न कंसस्तत्कृते हतः ॥ १९.९४३ ॥

जगत्कार्यकृतेऽस्मासु प्रसन्नं यदि ते मनः ।

तद्राज्यमपरित्याज्यं निजं निर्व्याजकारिणः ॥ १९.९४४ ॥

इत्युक्त्वाधोमुखः कृष्णो यदुवंशविभूषणः ।

वृद्धमैश्वर्यविमुखं बलान्नृपपदे व्यधात् ॥ १९.९४५ ॥

ततः कंसस्य राजार्हे सत्कार्ये बन्धुभिः कृते ।

उवास सानुजः कृष्णस्तत्र वृष्णिभिरर्चितः ॥ १९.९४६ ॥

▪ ▪ ▪ ▪ ▪ कं ससत्क्रिया ॥ २९ ॥ *****

ततः संदीपनेर्गत्वा कश्यपस्यान्तवासिनः ।

तौ गुरोर्व्रतसंपन्नौ सर्वविद्याविधेर्गृहम् ॥ १९.९४७ ॥

दिव्यास्त्रेषु सशब्देषु वेदेषु विदितात्मसु ।

निरवद्यासु विद्यासु कलास्वविकलासु च ॥ १९.९४८ ॥

अवापतुः परं पारं प्रतिभामणिदर्पणौ ।

पूजयन्तौ शिवं साक्षात्तौ पर्वसु विसंभ्रमम् ॥ १९.९४९ ॥

उक्तस्ततो गुरुस्ताभ्यां दक्षिणा गृह्यतामिति ।

उवाच प्राप्तुमिच्छामि प्रभावाद्युवोयरहम् ।

पुत्रं प्रभासयात्रायां समुद्रे तिमिना हृतम् ॥ १९.९५० ॥

गुरोरिति गिरा कृष्णः संकर्षणमते स्थितः ।

गत्वा जलनिधिं घोरं ममज्ज महसां निधिः ॥ १९.९५१ ॥

गुरोर्मम सुतः क्वासाविति वादिनमाशु तम् ।

कृताञ्जलिर्जलनिधिर्जगाद जगतां पतिम् ॥ १९.९५२ ॥

इह पञ्चजनो नाम दैत्यो वसति दुःसहः ।

तिमिरूपेण तेनासौ हृतः सांदीपनेः सुतः ॥ १९.९५३ ॥

इत्यम्बुधिगिरा वीरो हत्वा पञ्चजनं हरिः ।

अवाप पाञ्चजन्याख्यं शङ्खं न तु गुरोः सुतम् ॥ १९.९५४ ॥

ततो वैवस्वतं जित्वा गुरोः प्रेतपुरादपि ।

सशरीरं समादाय ददौ दामोदरः सुतम् ॥ १९.९५५ ॥

मथुरामथ संप्राप्य कृतास्त्रः सर्वयादवान् ।

रामेण सार्धं विदधे विस्मयानन्दनिर्भरान् ॥ १९.९५६ ॥

- - - - - इष्वस्त्रशिक्षा ॥ ३० ॥ *****

अत्रान्तरे कंसवधामर्षदीप्तानलाकुलः ।

स्वसुते विधवे दृष्ट्वा दुःखितः कंसवल्लभे ॥ १९.९५७ ॥

समभ्यायाज्जरासंधो मगधाधिपतिर्बली ।

राज्यं यत्संश्रयात्कंसो बद्ध्वा पितरमाप्तवान् ॥ १९.९५८ ॥

वीरास्तदनुगाश्चान्ये भूमिपालाः समाययुः ।

कारीषो दन्तवक्राख्यः शिशुपालश्च चेदिपः ॥ १९.९५९ ॥

कलिङ्गः कौशिकः पौण्ड्रः क्राथो रुक्मी सभीष्मकः ।

अंशुमानाहृतः साल्ववेणुदारिसमुद्रगाः ॥ १९.९६० ॥

त्रैगर्तः सुह्मसौवीरशैब्यपाण्ड्यविदेहपाः ।

काश्यकौसल्यगान्धारकाश्मीरयवनादयः ॥ १९.९६१ ॥

दशार्मभगदत्ताद्यास्ते नृपा बलशालिनः ।

रुन्धाना मथुरां चक्रुर्जग्निर्विवरं गजैः ॥ १९.९६२ ॥

तच्छत्त्रचामरस्फारफेनान्क्षितिपसागरान् ।

वीक्ष्य तान्समयं मेने प्राप्तं कालियसूदनः ॥ १९.९६३ ॥

अक्षौहिणीनां विंशत्या मागधेन तरस्विना ।

मथुरायां निरुद्धायां निर्ययुर्वृष्णियादवाः ॥ १९.९६४ ॥

ततः प्रवृत्ते समरे लाङ्गली मुसलायुधः ।

शार्ङ्गपाणिः स कंसारिर्वहन्कौमोदकी गदाम् ॥ १९.९६५ ॥

तालतार्क्ष्यध्वजाग्राभ्यां रथाभ्यां हेमकङ्कटाम् ।

वीरौ विविशतुर्वैरिसेनां रणसमाकुलाम् ॥ १९.९६६ ॥

तस्मिन्नाकृष्टदेहेषु पिष्टेषु मसुलेन च ।

रामेण कुञ्जरेन्द्रेषु निपतत्सु रथेषु च ।

वृष्णिभिर्युध्यमानेषु शौर्यशालिषु राजसु ॥ १९.९६७ ॥

शब्देनाकृष्यमाणस्य शार्ङ्गस्य मुरवैरिणः ।

दैत्यातमनां नरेन्द्राणां हृदयानि चकम्पिरे ॥ १९.९६८ ॥

जरासंधशरासारैर्विरथौ रामकेशवौ ।

पद्भ्यां विचेरतुर्वीरौ कुर्वाणौ सुभटक्षयम् ॥ १९.९६९ ॥

संकर्षणेन गदया निष्पिष्टस्यन्दनो युधि ।

गदापाणिर्जरासंधः स्वयं कोपात्तमाद्रवत् ॥ १९.९७० ॥

तयोर्घोरगदायुद्धे सुशिक्षाबलशालिनोः ।

बभूव कौतुकायातसुरनिर्विवरं नभः ॥ १९.९७१ ॥

तयोः प्राहरैः सावेगैर्गिरिसंचूर्णनोचितैः ।

धैर्यतुल्यानि गात्राणि दृढानि च चकम्पिरे ॥ १९.९७२ ॥

ततः समुद्यते घोरे प्रहारे जीवहारिणि ।

जरासंधाय रामेण प्रोच्चचार वचो दिवः ॥ १९.९७३ ॥

अलं मिथ्याप्रयासेन युधि धेनुकसूदनः ।

नायं वध्यस्त्वया राजा प्राजातोऽस्यान्तकः परः ॥ १९.९७४ ॥

श्रुत्वैतद्विरते रामे याति चास्तं दिवाकरे ।

बलयोरवहारोऽभुद्वारितोदारवीरयोः ॥ १९.९७५ ॥

▪ ▪ ▪ ▪ ▪ जरासंधयुद्धम् ॥ ३१ ॥ *****

याते जिते जरासंधेवीतविघ्नेषु वृष्णिषु ।

बालक्रीडाः स्मरन्रामः कदाचिद्गोव्रजं ययौ ॥ १९.९७६ ॥

प्रहृष्टः पूजितस्तत्र गोपैर्गोविन्दपूर्वजः ।

विजहार वनान्तेषु कान्तेषु कुसुमश्रिया ॥ १९.९७७ ॥

स कदम्बतरोर्मूले निषण्णः पुष्पहासिनः ।

विलोलपल्लवैस्तेन व्यजनैरिव वीजितः ॥ १९.९७८ ॥

हृष्टः पानोत्सुकः शुभ्रः कदम्बोदरनिर्गताम् ।

पपौ कादम्बरीं दिव्यां पुष्पामृतमयीं सुराम् ॥ १९.९७९ ॥

मदताम्रकपोलाग्रं संध्यारुणशशिप्रभम् ।

शुशुभे वदनं तस्य लीलान्दोतकुण्डलम् ॥ १९.९८० ॥

ततः कादम्बरी देवी दिव्याम्बरविभूषणा ।

कदम्बकेसरावाससंक्रान्तोदारसौरभा ॥ १९.९८१ ॥

व्यालोलकमलाकारमदाघूर्णितलोचना ।

सिषेवे रूपिणी रामं रममाणं मनोरमम् ॥ १९.९८२ ॥

कान्तामुखोपमानस्य कान्तिश्च तुहिनद्युतेः ।

प्रियाभिर्गीर्भिरभ्येत्य प्रहृष्टा तमतोषयत् ॥ १९.९८३ ॥

श्रीश्च विग्रहिणी तस्मै ददौ हेमाम्बुजस्रजम् ।

कुण्डलं किरणोदारं हारं च हरिणेक्षणा ॥ १९.९८४ ॥

नीलाम्बरः स विबभौ हेममालाविभूषितः ।

कैलास इव संसक्तविद्युद्द्योतिततोयदः ॥ १९.९८५ ॥

रराजराजसस्तस्य हारस्तर्जिततारकः ।

दुग्धाब्धेरिव फेनैघश्चन्द्रस्येवामृतद्रवः ॥ १९.९८६ ॥

ततः स मज्जनक्रीडाजातोत्कण्ठो मदालसः ।

एहीति दूराद्यमुनामुवाच स्स्वलिताक्षरम् ॥ १९.९८७ ॥

सा तद्वाक्यमनादृश्य किंचिन्नोवाच निम्नगा ।

यदा तदा रुषा रामः समुत्थायादहे हलम् ॥ १९.९८८ ॥

तां लोलनीलसलिलां हलाग्रेणाचकर्ष सः ।

संरम्भस्रस्तकबरीं मानिनीं कुपितामिव ॥ १९.९८९ ॥

क्षोभाकुलितहंसालीमेखलामुखरा मुहुः ।

संलक्ष्य पुलकश्रेणी क्वचितस्रस्तजलांशुका ॥ १९.९९० ॥

क्वचित्तरङ्गभ्रूभङ्गपरिवृत्तिपराङ्मुखी ।

छिन्नफेनावलीहाराकीर्णशीकरमौक्तिका ॥ १९.९९१ ॥

क्विचित्सलिलकल्लोलदुकूलग्रहणाकुला ।

क्विचिद्वीचीकराच्छन्नचक्रवाकोन्नतस्तनी ॥ १९.९९२ ॥

त्रासाकुलितवाचालविहङ्गवलया क्वचित् ।

आवर्तनर्तितोत्फुल्लनीलाब्जचकितेक्षणा ॥ १९.९९३ ॥

क्वचिद्वारिकुहूत्कारसनिःश्वासप्रलापिनी ।

सावेगगमनायासविषस्खलिता क्वचित् ॥ १९.९९४ ॥

हलेनाकृष्यमाणा सा समुद्भ्रान्ताभवन्नदी ।

मध्ये बृन्दावनं नीता ततः प्रत्यक्षरूपिणी ॥ १९.९९५ ॥

उवाच रामं यमुना कम्पमाना कृताञ्जलिः ।

विस्रस्तवारिवसना कम्पण्याकुलगामिनी ।

फेनैर्मां प्रहसिष्यन्ति सरितः सागरान्तिके ॥ १९.९९६ ॥

स्वरूपं प्राप्तुमिच्छामि प्रसन्ने त्वयि मानद ।

महात्मनां निकारेऽपि माननीया हि योषितः ॥ १९.९९७ ॥

इति प्रसादितो रामस्तया बालमृगीदृशा ।

विररामाद्भुताक्रान्तैर्चितो व्रजवासिभिः ॥ १९.९९८ ॥

- - - - - यमुनाकर्षणम् ॥ ३२ ॥ *****

ततः प्राप्तः स मथुरां पूजितः कालियद्विषा ।

दिव्यमालाम्बरः श्रीमान्यादवानन्दकृद्बभौ ॥ १९.९९९ ॥

विचिन्त्याथ जरासंधं गतं भग्नमनोरथम् ।

तं दुःसहमहानीकं पुनरागमनोत्सुकम् ॥ १९.१००० ॥

अत्यल्पां मथुरां वीक्ष्य वर्धमानांश्च यादवान् ।

उग्रसेनादिभिर्वृद्धैरमन्त्र्यत केशवः ॥ १९.१००१ ॥

सोऽब्रवीदयमत्यन्तप्रणयोपचितः क्रमः ।

गुरूणां भवतामग्रे यदस्माभिरिहोच्यते ॥ १९.१००२ ॥

इयं नयविदां कापि प्रख्याताभिमता मतिः ।

तिष्ठस्तु चिन्त्यते नीतिर्यद्वीरेषु महत्स्वपि ॥ १९.१००३ ॥

जरासंधेन नस्तावत्प्रजातो बलशालिना ।

निःसामसीमा वैराग्निरङ्गच्छेदसमुद्भवः ॥ १९.१००४ ॥

विरक्ताः पृथिवीपालास्ते ते तदनुयायिनः ।

जरासंधेन सहिता ये न जेयाः सुरैरपि ॥ १९.१००५ ॥

स कालयवनो म्लेच्छदरच्चीनशकाग्रगः ।

तथा बलनिरोधेन पुरीं नः समपीडयत् ॥ १९.१००६ ॥

स गार्ग्यस्योग्रतपसा संजातस्त्रिजगज्जयी ।

अवध्यः सर्वभूतानां वराद्वीरः पिनाकिनः ॥ १९.१००७ ॥

इयमस्मत्पुरीबन्धे तस्याश्वाकृदुद्भवा ।

सरिदश्वशकृत्संज्ञा लोके ख्याता प्रसर्पति ॥ १९.१००८ ॥

क्रमेण विनिपातानां भयं ते महतां द्विषाम् ।

नगर्यां प्राप दुर्गायां कालदेशोदयेन न ॥ १९.१००९ ॥

तस्माद्द्वारवतीं दुर्गां परिखाट्टलमालिनीम् ।

निवेशयितुमिच्छामि पश्चिमाब्धौ कुशस्थलीम् ॥ १९.१०१० ॥

इत्युक्ते शौरिणा प्राहुस्तथेति यदुपुंगवाः ।

श्रद्धा हि हितवाक्येषु भाविकल्याणसंपदाम् ॥ १९.१०११ ॥

कृष्णसर्पः ततः कृष्णः कुम्भे प्रक्षिप्य मुद्रिते ।

प्राहिणोद्यवनेन्द्राय दुःसहोऽस्मीत्युदाहरन् ॥ १९.१०१२ ॥

तं दृष्ट्वा कालयवनः प्रहस्योग्रैः पिपीलकैः ।

भक्षितं प्रेषयामास सर्पं सेनाढ्यतां वदन् ॥ १९.१०१३ ॥

ततः कृष्मेन सहिताः पुरीं जलधिमेखलाम् ।

प्रययुर्मथुरां त्यक्त्वा सर्वे यादववृष्णयः ॥ १९.१०१४ ॥

ततः परिवृता वीरैर्भ्राजमाना सुरैरिव ।

पुरी कृष्णेन शुशुभे शक्रेणेवामरावती ॥ १९.१०१५ ॥

ततः कदाचिदेकाकी पादचारी जनार्दनः ।

आक्रष्टुं कालयवनं प्रययौ नयकोविदः ॥ १९.१०१६ ॥

गोविन्दमागतं दृष्ट्वा प्रहृष्टो यवनाधिपः ।

अभ्याद्रवन्महाकायः कालः काल इवोत्कटः ॥ १९.१०१७ ॥

मनोजवं जगद्वैरी स जिघृक्षुर्जनार्दनम् ।

वेगाभिसारी विदधे कम्पक्षुभाकुला दिशः ॥ १९.१०१८ ॥

स्वमायामिव गम्भीरां धीरो गिरिगुहां ततः ।

विवेश विपुलायामामचिन्त्यगतिरच्युतः ॥ १९.१०१९ ॥

मान्धातुस्तनयस्तत्र मुचुकुन्दः क्षितीश्वरः ।

देवासुररणे कृत्वा शक्रस्य रिपुसंक्षयम् ॥ १९.१०२० ॥

श्रान्तो निद्रां वरात्प्राप्य विदधे संविदं सुरैः ।

निद्राक्षयं मे यः कुर्यात्स गच्छेद्भस्मसादिति ॥ १९.१०२१ ॥

सुचिरं रत्नपर्यङ्के शयानस्याथ तस्य सः ।

राज्ञो गुहायां गोविन्दः शीर्षन्ते समुपाविशत् ॥ १९.१०२२ ॥

ततः प्रविश्य सावेगं कोपप्रज्वलितः श्वसन् ।

सुप्तं ददर्श राजर्षिं यवनः पर्वताकृतिम् ॥ १९.१०२३ ॥

पिहिताननमालोक्य तं कालयवनः क्रुधा ।

कृष्मोऽयमिति संचिन्त्य पदा पस्पर्श भूमिपम् ॥ १९.१०२४ ॥

सहसा प्रतिबुद्धोऽथ मुचुकुन्दनृपः पदा ।

स्पृशन्तं दुःकहरुषा चक्षुषा भस्मसाद्व्यधात् ॥ १९.१०२५ ॥

निर्दग्धे कालयवने परिवृत्ताननो नृपः ।

निद्राकषायनयनः पुण्डरीकाक्षमैक्षत ॥ १९.१०२६ ॥

स दृष्ट्वा मन्दराकारः कृष्णमत्यल्पविग्रहम् ।

विपुलं कालसंज्ञासीदतीतं जगतीपतिः ॥ १९.१०२७ ॥

को भवानिति पृष्टोऽथ मुचुकुन्देन केशवः ।

न्यवेदयत्स्ववृत्तान्तमभिवाद्य कृताञ्जलिः ॥ १९.१०२८ ॥

युगत्रयं गतं ज्ञात्वा निद्रायाः पृथिवीपतिः ।

गुल्फप्रमाणा दृष्ट्वा च प्रजा ह्रस्वत्वमागताः ।

न चकार मतिं राज्ये विरसे विगतस्पृहः ॥ १९.१०२९ ॥

समानेषु व्यतीतेषु शून्यासु प्रेमभूमिषु ।

जीर्णे जगति विच्छाये सजने का रतिः सताम् ॥ १९.१०३० ॥

स गत्वा तपसे धीमान्कन्दरं हिमभूभृतः ।

आरुरोह नृपः स्वर्गं स्वारोहं पुण्यसंपदाम् ॥ १९.१०३१ ॥

- - - - - कालयवनवधः ॥ ३३ ॥ *****

कृष्णोऽथ द्वारकां गत्वा विहितां विश्वकर्मणा ।

हेमप्रतोलीप्राकारां रत्नगोपुरतोरणाम् ॥ १९.१०३२ ॥

स्फारस्फटिकहर्म्यांशुमालारचितचन्द्रिकाम् ।

अमृतोद्गारिणीं क्षीरसागरादिव निर्मिताम् ॥ १९.१०३३ ॥

मणिभित्तिषु संक्रान्तकान्तावदनमालिकाम् ।

विजज्य बहुधात्मानं शशाङ्केनेव सेविताम् ॥ १९.१०३४ ॥

विवेश विषदोद्द्योतां सानुगां सततोऽसवाम् ।

स सैन्यधनमादाय निखिलं यवनार्जितम् ॥ १९.१०३५ ॥

तस्यां पोरजनं सर्वं शङ्खो नाम निधीश्वरः ।

कृष्णस्य शासनात्तूर्णं हेमरत्नैरपूरयत् ॥ १९.१०३६ ॥

विसृज्य पवनं साक्षात्त्रिदिवं देवकीसुतः ।

आनिनाय सुधर्माख्यां दिव्यां देवसभां विभुः ॥ १९.१०३७ ॥

सा पुरी सुभटैर्गुप्ता वृष्णिसात्वतयादवैः ।

मेरोरिव गुहासिंहैः शुशुभे कान्तिनिर्भरा ॥ १९.१०३८ ॥

दत्तेव काले विपुले समुद्रेण हरेर्गिरा ।

अनेकयोजनायामा पुरी साभूद्गरीयसी ॥ १९.१०३९ ॥

अत्रान्तरे भीष्मकस्य दाक्षिणात्यस्य भूपतेः ।

शुश्राव रुक्मिणीं कृष्मः कन्यां रूपेम विश्रुताम् ॥ १९.१०४० ॥

सापि शुश्राव कंसारिं कृष्णं कमललोचनम् ।

अभिलाषरसोदारं किमप्यासीन्मनस्तयोः ॥ १९.१०४१ ॥

भीष्मकस्यात्मजो रुक्मी भुजशाली रणोत्कटः ।

वीरो बिभर्ति यः स्पर्धां भुवि भार्गवभीष्मयोः ॥ १९.१०४२ ॥

अनुजां रुक्मिणीं दृप्तः स कृष्मेनार्थितां सदा ।

न ददौ कंसदासोऽयमिति द्वेषादुदाहरन् ॥ १९.१०४३ ॥

ततो जरासंधगिरा शिशुपालाय भूभुजे ।

तां दातुमुद्ययौ पुत्रीं भीष्मकः पुत्रसंमते ॥ १९.१०४४ ॥

वसुदेवस्वसुः पुत्रः शिशुपालोऽथ तत्पुरीम् ।

कृष्णादिभिर्वृष्णिवीरैर्वारयात्राभिमन्त्रितैः ॥ १९.१०४५ ॥

दन्तवक्रजरासंधमुख्यैश्च सह राजभिः ।

स विवाहोत्सवे प्रायाद्भीष्मकेनाभिपूजितः ॥ १९.१०४६ ॥

इन्द्राणीपूजनव्यग्रां तत्र लोचनचन्द्रिकाम् ।

ददर्श रुक्मिणीं कृष्णः कृष्णशारायतेक्षणाम् ॥ १९.१०४७ ॥

सुमुखीं कान्तिललितामाताम्राधरपल्लवाम् ।

लक्ष्मीमिव सहोत्पन्नां चन्द्रामृतसुरद्रुमैः ॥ १९.१०४८ ॥

तीं वीक्ष्य पद्मवदनां मदनोद्यानमाधवीम् ।

माधवो मधुसंसिक्त इव क्षणमचिन्तयत् ॥ १९.१०४९ ॥

इयं शुभ्रांशुकोत्फुल्लफेना कान्तितरङ्गिणी ।

हरहुंकारदग्धस्य जीवती पुष्पधन्वनः ॥ १९.१०५० ॥

लज्जैव जलजस्पर्धा प्रभेयं शशिनः कुतः ।

उपमानं सुखस्यास्याः स्वमुखं दर्पणे यदि ॥ १९.१०५१ ॥

चिन्तयन्निति वैकुण्ठः सोत्कण्ठं मन्मथाकुलः ।

जहार संमते भ्रातुः सहसा भीष्मकात्मजाम् ॥ १९.१०५२ ॥

रथेन रथिना तेन हृतायां वातरंहसा ।

उदबूत्सुभटक्षोभगम्भीरो भूभुजां रवः ॥ १९.१०५३ ॥

इयं कृष्णेन कृष्णेन कन्या कन्या हृता हृता ।

इति व्याहरतामेव राज्ञां मोह इवाभवत् ॥ १९.१०५४ ॥

वृष्णीनां राममुख्यानां भारं विन्यस्य दुःसहम् ।

तार्क्ष्यकेतौ द्रुतं याते घोरं युद्धमवर्तत ॥ १९.१०५५ ॥

रामसात्यकिहार्दिक्यगदाक्रूरविदूरथैः ।

वक्रदेवसुनक्षत्रसारणाद्यैश्च यादवैः ॥ १९.१०५६ ॥

शिशुपालजरासंधमुख्यानां भूभुजां रणे ।

अकालरजनीवाभूत्क्षणं निर्विवरैः शरैः ॥ १९.१०५७ ॥

बलिना बलदेवेन वध्यमानेषु वैरिषु ।

शिशुपालेन चान्येषु संक्षयः सैन्ययोरभूत् ॥ १९.१०५८ ॥

अत्रान्तरे पुरो राज्ञां रुक्मी क्रोधाग्निना ज्वलन् ।

पितुश्चोवाच संनद्धः श्वसन्नाग इवाहतः ॥ १९.१०५९ ॥

नाहत्वा मलिनाचारं कृष्णं दुर्नयकारिणम् ।

स्वपुरं समुपेष्यामि वीरव्रतपरिच्युतः ॥ १९.१०६० ॥

इत्युक्त्वा रथमारुह्य वीरैरनुगतो नृपैः ।

जवोद्धूतपताकाग्रः स ययौ नादयन्दिशः ॥ १९.१०६१ ॥

दूरादायान्तमालोक्य रथस्थो रुक्मिणीसखः ।

तस्थौ हरिः परावृत्य कर्णान्ताकृष्टकार्मुकः ॥ १९.१०६२ ॥

ततः श्रेणीकृतैः क्षिप्रं घनैः कृष्णशिलीमुखैः ।

आच्छाद्यमाना विबभुर्भूपालकमलाकराः ॥ १९.१०६३ ॥

शौरिरापूर्यमाणोऽथ रुक्मिचापच्युतैः शरैः ।

हेमपुङ्खैरभूद्व्याप्तः सूर्यांशुभिरिवाचलः ॥ १९.१०६४ ॥

अक्षयां क्षितिपैः क्षिप्तां दीप्तशस्त्रपरस्पराम् ।

भिन्दानः सायकैस्तूर्णं बभौ नृत्यन्निवाच्युतः ॥ १९.१०६५ ॥

ततः कृष्णशरैः क्षिप्रं छिन्नच्छत्ररथध्वजाः ।

बभूवुः कृत्तकोदण्डास्ते खण्डितमनोरथाः ॥ १९.१०६६ ॥

दिव्यास्त्रवर्षिणः शौरिश्छित्वा सर्वायुधान्यथ ।

रुक्मिणस्तीव्रनाराचैर्विव्याध हृदयं त्रिभिः ॥ १९.१०६७ ॥

मूर्च्छिते पतिते तस्मिन्विद्रुते राजमण्डले ।

ररक्ष शौरिर्दयया रुक्मिणं रुक्मिणीगिरा ॥ १९.१०६८ ॥

याते द्वारवतीं कृष्णे विनिवृत्तेषु वृष्णिषु ।

कुण्डिनाख्यं पुरं रुक्मी प्रविवेश न लज्जया ॥ १९.१०६९ ॥

प्रतिज्ञया परित्यक्तपुरः स विदधे परम् ।

पुरं भोजकटं नाम मानभङ्गं विचिन्तयन् ॥ १९.१०७० ॥

▪ ▪ ▪ ▪ ▪ रुक्मिणीहरणम् ॥ ३४ ॥ *****

जयश्रियमिवादाय श्रियं मूर्त्यन्तरागतम् ।

भेजे विवाहविधिना रुक्मिणीं रुक्मिणीप्रियः ॥ १९.१०७१ ॥

स तया पुण्डरीकाक्षः फुल्लोन्दीवचतक्षुषा ।

विजहार सुधासारपरिपूरितमानसः ॥ १९.१०७२ ॥

तस्यमजीजनत्पुत्रान्दश त्रिदशसंनिभान् ।

प्रद्युम्नचारुदोष्णाद्यान्कन्यां चारुमतीं तथा ॥ १९.१०७३ ॥

ततः प्राप प्रियाः प्रेमप्रणयोद्यानवल्लरीः ।

अन्या जगत्पतिः पत्नीर्मूर्ता इव दिशो दश ॥ १९.१०७४ ॥

कालिन्दी सत्यभामा च सत्या जाम्बवती तथा ।

मित्रविन्दा सुशीला च लक्ष्मणा जालवासिनी ॥ १९.१०७५ ॥

सुदन्ता रोहिणी चेति ताश्चन्द्रवदनाः सदा ।

श्यामाः श्यामा इव प्रीत्या भेजिरे शेषशायिनम् ॥ १९.१०७६ ॥

स षोडशसहस्राणि दिव्यानां हरिणीदृशाम् ।

स्वैरं कन्दर्पलीलासु विश्वरूपं सिषेविरे ॥ १९.१०७७ ॥

तासु विश्वसृजस्तस्य लक्षसंख्योऽभवद्विभोः ।

पुत्रवर्गः सुरारातिक्षयक्षमपराक्रमः ॥ १९.१०७८ ॥

नारायणीं चन्द्रसेनां वैदर्भीं कृष्णनन्दनः ।

लेभे स्वयंवरे कन्यां प्रद्युम्नश्चारुलोचनः ॥ १९.१०७९ ॥

तेनाजनि सुतस्तस्यामनिरुद्धः स्मरद्युतिः ।

रूपं यस्यायताक्षीणां दृग्वशीकरणाञ्जनम् ॥ १९.१०८० ॥

कालेन रुक्मिणः पौत्रीमनिरुद्धः सुलोचनाम् ।

प्राप्तुं ययौ रुक्मवतीं सह यादववृष्णिभिः ॥ १९.१०८१ ॥

हलायुधप्रधानेषु तेषु तत्र स्थितेष्वथ ।

छद्मद्यूते मतिरभूद्दाक्षिणात्यमहीभुजाम् ॥ १९.१०८२ ॥

ते संमन्त्र्य सभासीना रत्नासनजुषो नृपाः ।

कितवे चक्रुराह्वानं संहतास्ताललक्ष्मणः ॥ १९.१०८३ ॥

तस्य तैः संप्रवृत्तेऽथ द्यूते कलहदोहदे ।

पणेषु वर्तमानेषु मिथः कनककोटिभिः ॥ १९.१०८४ ॥

क्षद्रैर्निकृत्यानिर्व्याजो राम एव जितोऽसकृत् ।

तमुवाचाजितो रुक्मी विहस्याक्षान्प्रतोलयन् ॥ १९.१०८५ ॥

अविद्यो दुर्बलश्चायमहो बहुधनो जितः ।

तच्छ्रुत्वा मन्युसंतप्तः श्वसन्कृष्णाग्रजोऽवदत् ॥ १९.१०८६ ॥

दशकोटिसहस्राणि हिरण्यस्य पणो मम ।

इत्युक्तो हलिना रुक्मी न किंचित्प्रत्युवाच तम् ॥ १९.१०८७ ॥

निपातितेष्वथाक्षेषु जितः कृष्णाग्रजेन सः ।

मौनकृन्न जितोऽस्मीति जगाद व्याजमाश्रितः ॥ १९.१०८८ ॥

तेनास्य जिह्मवचसा कुपिते मुसलायुधे ।

उच्चचार स्फुटा वाणी गगनादशरीरिणी ॥ १९.१०८९ ॥

रामेण विजितो रुक्मी कृत्वाभ्युपगमो धिया ।

प्रमाणं हि मनोवृत्तिः सर्वकार्येषु देहिनाम् ॥ १९.१०९० ॥

तच्छ्रुत्वा न जितोऽस्मीति वादिनं पुनरेव तम् ।

अष्टापदेन सावेगमवधीन्मुसलायुधः ॥ १९.१०९१ ॥

दन्तान्कलिङ्गराजस्य निपात्य समदो बलः ।

उत्पाट्य कलभस्तम्भमाद्रवत्क्रथकैशिकान् ॥ १९.१०९२ ॥

कालानलद्विषस्तस्य त्रासाद्यातेषु राजसु ।

रुक्मिणि क्ष्माभृतां नाथे हते शक्रपराक्रमे ॥ १९.१०९३ ॥

यातेषु वृष्णिवीरेषु शनैः सानुशयेष्विव ।

वृत्तं न्यवेदयत्सर्वमच्युतायाच्युताग्रजः ॥ १९.१०९४ ॥

ततो विलापमुखरां रुक्मिणीं मधुसूदनः ।

परिसान्त्व्यानतमुखं किंचिन्नोचे हलायुधम् ॥ १९.१०९५ ॥

▪ ▪ ▪ ▪ ▪ रुक्मिवधः ॥ ३५ ॥ *****

एवं भार्गवतुल्योऽसाववध्यस्त्रिदशैरपि ।

हतः शेषावतारेण स रुक्मी तालकेतुना ॥ १९.१०९६ ॥

साम्बो नाम कदाचित्तु जाम्बवत्यां हरेः सुतः ।

दुर्योधनसुतां हर्तुं प्रययौ हस्तिनापुरम् ॥ १९.१०९७ ॥

कन्याहरणकोपेन तस्मिन्राजस्वयंवरे ।

संरुद्धो धार्तराष्ट्रेण मानिना माधवात्मजः ॥ १९.१०९८ ॥

क्रुद्धोऽथ तद्विमोक्षाय स्वयमेत्य हलायुध ।

पुरं कौरवराजस्य तरसा भङ्क्तुमुद्यतः ॥ १९.१०९९ ॥

प्राकारवप्रे विदधे हलं गङ्गातटोन्मुखम् ।

चचाल येन निखिल सहसां हस्तिनापुरम् ॥ १९.११०० ॥

पुरं सगोपुराट्टालं हलाकर्षणघूर्णितम् ।

गङ्गायामुद्यतं क्षेप्तुं ज्ञात्वा क्रुद्धं हलायुधम् ॥ १९.११०१ ॥

दुर्योधनः स्वंय गत्वा प्रणिपत्य प्रसाद्य च ।

साम्बं मुक्त्वा गदायुद्धे प्रययौ तस्य शिष्यताम् ॥ १९.११०२ ॥

इत्येवं बलदेवस्य बलमत्यद्भुतं विभोः ।

येन नागायुतप्राणो भीमो दोर्भ्यां पराजितः ॥ १९.११०३ ॥

- - - - - बलदेवमाहात्म्यम् ॥ ३६ ॥ *****

अत्रान्तरे भुवः सूनुर्नरको नाम दानवः ।

जहार सर्वरत्नानि स्त्रियश्च त्रिदिवौकसाम् ॥ १९.११०४ ॥

अदितेः कुण्डलाहारी भयदीक्षां चकार यः ।

युधि सेहे न तं कश्चित्प्रवृद्धं लोककण्टकम् ॥ १९.११०५ ॥

ततः कदाचिद्वैडूर्यस्तम्भभूरिप्रभां सभाम् ।

आसीने वृष्णिभिः सार्धं कृष्णे रत्नासनोज्ज्वलाम् ॥ १९.११०६ ॥

अदृश्यत स्फुरत्तेजःपुञ्जैः पिञ्जरितं नभः ।

रविवाजिखुरक्षुण्णमेरुहेमरजःप्रभैः ॥ १९.११०७ ॥

तन्मध्ये शनकैः श्रीमान्सुरेन्द्रः स्फुटमाबभौ ।

ऐरावणकराशीर्णव्योमगङ्गाम्बुनिर्झरः ॥ १९.११०८ ॥

सोऽवतीर्य दिवश्चन्द्रधवलच्छत्त्रचामरः ।

भूषणांशुवनैर्व्याप्तः शक्रचापचयैरिव ॥ १९.११०९ ॥

सहसाभ्युत्थितैर्हर्षविस्मयादरशालिभिः ।

पूजितो वृष्णिभिः कृष्णबलदेवाह्वकादिभिः ॥ १९.१११० ॥

अवतीर्य गजातूर्णमलंकृतमहासनः ।

प्रीत्या विलोकयन्विष्णुं सहस्राक्षः समभ्यधात् ॥ १९.११११ ॥

अहो सुचरितश्लाघ्ना धन्या माधववृष्णयः ।

उदिते दृश्यसै यैस्त्वं रविः पद्माकरैरिव ॥ १९.१११२ ॥

कर्तारं लोककार्याणां हर्तारं सुरविद्विषाम् ।

त्रैलोक्योपप्लवच्छित्त्यै त्वामहं समुपागतः ॥ १९.१११३ ॥

जगन्ति जगतां नाथ नरको नाम भूमिजः ।

बाधते कामगं यस्य पुरं प्राग्ज्योतिषं दिवि ॥ १९.१११४ ॥

देव्या दिवौकसां मातुरदितेर्दिव्यकुण्डले ।

जहार तरसा दीप्ते स महादित्यतेजसा ॥ १९.१११५ ॥

दैत्या सुरहयग्रीवनिसुन्दाख्यास्तदाश्रयाः ।

क्षपयन्त्यक्षया भांसि महांसि च यशांसि नः ॥ १९.१११६ ॥

तस्यान्धतमसस्येव निधने धरणीभुवः ।

क्षमस्त्वमेव प्रोच्चण्डचक्रसूर्योदयाचलः ॥ १९.१११७ ॥

मनोरथ इवास्माकमयं त्वां पतगेश्वरः ।

प्रापयिष्यति यत्रासौ दैत्यः स्वपुरसंश्रयः ॥ १९.१११८ ॥

इत्युक्त्वा विरते शक्रे तथेत्युक्ते मुरारिणा ।

विद्युत्पुञ्ज इवाकाशे गरुडः प्रत्यपद्यत ॥ १९.१११९ ॥

चक्रायुधः समारुह्य सत्यभामासखः क्षणात् ।

ऐरावणं सुरेन्द्रश्च व्योममार्गेण जग्मतुः ॥ १९.११२० ॥

नाकं नाकपतौ याते हरिः प्राग्ज्योतिषं पुरम् ।

व्रजन्पाशसहस्राणि षट्छित्त्वासुरमन्दिरे ॥ १९.११२१ ॥

सभृत्यामात्यतनयं मुरं हत्वा सबान्धवम् ।

निसुन्दं च शिलासंघान्विदार्याशनिसंहातान् ॥ १९.११२२ ॥

हयग्रीवं च यो वर्षसहस्रं युयुधे सुरैः ।

विरूपाक्षं च पाप्मानमलकायां सहानुगम् ॥ १९.११२३ ॥

मध्ये लोहितगङ्गस्य तारं पञ्चकरं तथा ।

हत्वा प्राग्ज्योतिषपुरं समासाद्य मनोजवम् ।

अष्टौ लक्षाणि दैत्यानां निंजघान घनौजसाम् ॥ १९.११२४ ॥

ततो युद्धमभूद्धोरं नरकेन(ण) मधुच्चिदः ।

भयदं सर्वभूतानां भुवनाकम्पनं महत् ॥ १९.११२५ ॥

अथ क्रकचधारेण वज्रनाभेन भास्वता ।

चक्रे चक्रेण नरकं द्विधा चक्रायुधः क्रुधा ॥ १९.११२६ ॥

विस्फारभूधराकारे पतिते भुवि भूमिजे ।

चक्रधारानलप्लुष्टे तस्मिन्सपुरमन्दिरे ॥ १९.११२७ ॥

पुत्रशोकाकुला देवी छत्रं च प्रददौ मही ।

तत्प्रजापरिरक्षायै कुण्डले कैटभद्विषः ॥ १९.११२८ ॥

- - - - - नरकवधः ॥ ३७ ॥ *****

तस्याथ लुण्ठिताशेषसुरेन्द्रधनदश्रियः ।

रत्नसंचयमाहृत्य तत्पुरान्निर्ययौ हरिः ॥ १९.११२९ ॥

नरकेण महच्छत्त्रं हृतं यत्पाथसां पतेः ।

धाराशतसहस्राङ्कं दाशार्हस्तज्जहार च ॥ १९.११३० ॥

निरुद्धास्तेन गन्धर्वसुरकिन्नरकन्यकाः ।

रत्नशैले विनिहिता ददर्श मधुसूदनः ॥ १९.११३१ ॥

गोविन्ददर्शनानन्दसुधास्यन्दतरङ्गिताः ।

मणिपर्वतमुत्पाद्य ताक्ष्र्यकेतुर्निनाय ताः ॥ १९.११३२ ॥

स दृष्ट्वा दिवि देवेशं पूजितस्तेन सादरम् ।

शच्या संमानितां सत्यभामामालोकयन्मुदा ॥ १९.११३३ ॥

देवीं च देवजननीमदितिं दानवान्तकः ।

प्रणम्य सह शक्रेण दत्वास्यै दिव्यकुण्डले ॥ १९.११३४ ॥

ददर्श नन्दनोत्तंसं सर्वकामप्रदं सदा ।

पारिजातं सुधाजातमभिजातमिवेश्वरम् ॥ १९.११३५ ॥

तं दृष्ट्वा नयनानन्दबान्धवं माधवः स्वयम् ।

समुत्पाद्य जहाराशु तच्चामन्यत बृत्रहा ॥ १९.११३६ ॥

सत्यभामासखः पारिजातयुक्तो व्रजन्दिवि ।

सुपर्णवाहनः सोऽभून्मूर्तो रस इवाद्भुतः ॥ १९.११३७ ॥

विद्याधरवधूवृन्दैर्विस्मयानन्दनिर्भरैः ।

मुहुः स कौतुकोत्कण्ठैः पीयमान इवेक्षणैः ॥ १९.११३८ ॥

द्वारकां स समासाद्य विसृज्य विहगेश्वरम् ।

भूयो विचित्रसंस्कारैर्भूषितां शक्रशासनात् ॥ १९.११३९ ॥

रत्नान्तःपुरसंबाधामद्भुतां विश्वकर्मणा ।

लोलहेमलताजालैर्मणिकाञ्चनशेखरैः ।

भूधरैरभितो गुप्तां निर्झरोदारकन्दरैः ॥ १९.११४० ॥

भूधरैरभितो पुरीं वीरः पूजितो वृष्मियादवैः ।

स्वसारं मध्यगां भ्रात्रोर्नुत्वा देवीं बलाधिकाम् ॥ १९.११४१ ॥

चरितैर्विजयोदारैर्नारदेन स्तुतः स्वयम् ।

हरिणीहारिनेत्राभिर्विजहार हरिश्चिरम् ॥ १९.११४२ ॥

▪ ▪ ▪ ▪ ▪ पारिजातहरणम् ॥ ३८ ॥ *****

प्रद्युम्नो यस्तु रुक्मिण्यामजायत हरेः सुतः ।

दैत्येन शम्बराख्येन हृतो यः सूतिकालयात् ॥ १९.११४३ ॥

यश्चोक्षुमति दैत्यस्य प्रवृद्धो नगरे शिशुः ।

प्रीत्याः शनैः कृतस्तेन सर्वमायास्त्रापारगः ॥ १९.११४४ ॥

निजं हरणवृत्तान्तं ज्ञात्वा तद्वल्लभागिरा ।

समं समस्तमायाङ्गं हत्वाष्टम्भां महारणे ॥ १९.११४५ ॥

तं कालशम्बरं घोरं साभिलाषां च तद्वधूम् ।

विहितप्रार्थनां कान्तः कान्तां मायावतीं जवात् ॥ १९.११४६ ॥

हृत्वा गगनमार्गेण द्वारकामभिपत्य यः ।

ववन्दे निर्भरानन्दं जनकं रुक्मिणीसखम् ॥ १९.११४७ ॥

स्मरवतारो यः श्रीमान्शम्बरस्य विमोहनः ।

स बभूव परं वीरः कार्ष्णिलोकेषु विश्रुतः ।

तत्तुल्याः साम्बमुख्याश्च विख्याता माधवात्मजाः ॥ १९.११४८ ॥

▪ ▪ ▪ ▪ ▪ शम्बरवधः ॥ ३९ ॥ *****

त्रिदशस्पृहणीयां तामाश्चर्यां भुवि दुर्लभाम् ।

सपुत्रस्य हरेर्भूपा विभूतिं द्रष्टुमाययुः ॥ १९.११४९ ॥

दुर्योधनप्रधानास्ते नानादेश्या नराधिपाः ।

अक्षौहिणीभिर्वीराणामष्टादशभिरावृताः ॥ १९.११५० ॥

गिरिं रैवतकं सर्वे परिवार्य सविस्मयाः ।

तस्थुर्विविक्तरम्यासु द्वारकोपान्तभूमिषु ॥ १९.११५१ ॥

ततो निर्गत्य भगवन्सर्वैर्वृष्णिगणैः सह ।

यथाक्रमं हरिः सर्वान्पूजयंस्तान्क्षितीश्वरान् ॥ १९.११५२ ॥

तेषु सिंहासनस्थेषु भेजे रत्नासनं महत् ।

धाम्नां निधिरिव श्रीमान्रोहणाचलशेखरम् ॥ १९.११५३ ॥

राजाम्बुजवनोत्था श्रीर्बन्दिनूपुरराविणी ।

गोविन्दमालिङ्गेव च्छत्त्रचामरहासिनी ॥ १९.११५४ ॥

तं भूपतिसभासीनं द्रष्टुमभ्येत्य नारदः ।

उवाच देव धन्यस्त्वमाश्चर्यं त्रिदिवौकसान् ॥ १९.११५५ ॥

दक्षिणाभिः सहास्मीति प्रत्युक्ते तेन नारदे ।

किमेतादिति पप्रच्छ भूपालाः कौतुकाकुलाः ॥ १९.११५६ ॥

कथ्यतामिति कृष्णेन सादरं प्रेरितोऽवदत् ।

अहं त्रिषवणस्नायी कदाचिद्द्युनदीतटे ।

अवदं कूर्ममालोक्य धन्योऽस्मीत्यद्भुताकृतिम् ॥ १९.११५७ ॥

सोऽब्रवीदद्भुता गङ्गा धन्या वा(या)स्मद्विधैः श्रिता ।

धन्यासीति मया सापि पृष्टा मां प्रत्यभाषत ॥ १९.११५८ ॥

धन्योऽब्धिरद्भुततरः सर्वासां सरिता पतिः ।

पृष्टः सोऽपि मया प्राह मत्तः क्षितिरियं वरा ॥ १९.११५९ ॥

साप्युवाचाद्भुततरा भूधरा यैरहं धृता ।

जगदुस्तेऽपि जगतां स्रष्टा पद्मोद्भवोऽद्भुतः ॥ १९.११६० ॥

पृष्टः सोऽप्यवदद्वेदाः सर्वाश्चर्यमहत्तराः ।

देऽप्यूचुरद्भुता यज्ञा येषामर्थे वयं स्थिताः ॥ १९.११६१ ॥

तेऽप्यूचिरे मया पृष्टा गतिर्नो विष्णुरद्भुतः ।

सत्यः सनातनः पुण्यो यः सर्वहुतमश्नुते ॥ १९.११६२ ॥

एतच्छ्रुत्वा मयाभ्येत्य कृष्णः पृष्टोऽतिकौतुकात् ।

दक्षिणाभिः सहास्मीति विभुर्मामेतदुक्तवान् ॥ १९.११६३ ॥

इत्युक्त्वा नारदे याते विस्मिते राजमण्डले ।

गते संप्राप्तसत्कारे विवेश स्वपुरं हरिः ॥ १९.११६४ ॥

- - - - - आश्चर्यपर्व ॥ ४० ॥ *****

कदाचिद्विपूले यज्ञे दीक्षितः केशवः स्वयम् ।

त्रायस्वेत्यर्थितोऽभ्येत्य दुःखितेन द्विजन्मना ॥ १९.११६५ ॥

ब्रूहि किं ते भयमिति ब्राह्मणः शौरिणोदितः ।

उवाच भाग्यहीनस्य जाता जाताः सुतास्त्रयः ॥ १९.११६६ ॥

हृताः केनापि भूतेन चतुर्थं परिरक्ष मे ।

जायायाः सूतिकालोऽयं ममेत्युक्ते द्विजन्मना ।

तद्रक्षायै ददौ विष्णुर्वृष्णिवीरैः सहार्जुनम् ॥ १९.११६७ ॥

गाण्डीवधन्वा संप्राप्य ब्राह्मणावसथं क्षणात् ।

दिशो वृष्णिभिरावृत्य तस्थौ रक्षाकृतक्षणः ॥ १९.११६८ ॥

ततोर्ऽधरात्रे सूतायां बाह्मण्यां दुर्निमित्तवान् ।

हृतो हृतः सुत इति प्रादुरासीज्जनस्वनः ॥ १९.११६९ ॥

स्त्रीणामार्तस्वनं श्रुत्वा बालस्य करुमस्वनम् ।

पार्थसात्यकिमुख्यास्ते सायकैः स्वमपूरयन् ॥ १९.११७० ॥

तेषु मोघश्रमेष्वेव धिक्कृतेषु द्विजन्मना ।

लज्जितेषु प्रयातेषु श्रुत्वा तद्वृत्तमच्युतः ॥ १९.११७१ ॥

शैब्यसुग्रीवयुक्तेन रथेनार्जुनसारथिः ।

दत्तवर्त्मा समुद्रेण प्रतस्थे गरुडध्वजः ॥ १९.११७२ ॥

स्तब्धतोयं समुत्तीर्य सागरं स मनोजवः ।

प्रणतैर्मेरुकैलासमुख्यैर्दत्तान्तरः पथि ॥ १९.११७३ ॥

पुनश्चक्रेण तिमिरं समुत्पाट्य शिलाघनम् ।

आसाद्य विमलं व्योम तेजः पुरुषविग्रहम् ॥ १९.११७४ ॥

अविच्छिन्नं जगद्व्यापि दृष्ट्वा त्यक्त्वा च तं रथम् ।

प्रविश्यार्कसहस्राभं मुहूर्तान्निर्ययौ हरिः ॥ १९.११७५ ॥

तत एव समादाय ददौ पुत्रचतुष्टयम् ।

सहर्षविस्मयापूर्णहृदयाय द्विजन्मने ॥ १९.११७६ ॥

द्वारकामथ संप्राप्तः कैटभारिः किरीटिना ।

पृष्टस्तदद्भूततरं प्रोवाचाश्चर्यसागरः ॥ १९.११७७ ॥

ते शैलास्तच्च तिमिरं तेजस्तच्चातिभास्करम् ।

अहमेव जगज्जन्मस्थितिसंहारकारणम् ॥ १९.११७८ ॥

तेजोमयेन ते तेन मत्समागमकाङ्क्षिणा ।

ब्राह्मणस्य हृताः पुत्रा वितीर्णाश्च महात्मना ॥ १९.११७९ ॥

▪ ▪ ▪ ▪ ▪ वासुदेवमाहात्म्यम् ॥ ४१ ॥ *****

अत्रान्तरे बडेः(लेः) सूनुर्बाणो नाम महासुरः ।

जहार सुरसंघानां तेजांसि च यशांसि च ॥ १९.११८० ॥

ततः प्रसन्नो भगवान्भवो भक्तजनप्रियः ।

आस्थाने यस्य स गणः सभ्यतां सततं ययौ ॥ १९.११८१ ॥

यः सहस्रभुजस्तम्भस्तम्भितामरविक्रमः ।

त्रिविक्रमस्याप्यनयत्प्राप्तं वामनतां यशः ॥ १९.११८२ ॥

स वीरः समराकाङ्क्षी कदाचित्त्रिपुरान्तकम् ।

पप्रच्छ विजिताशेषः प्रणयावर्जिताञ्जलिः ॥ १९.११८३ ॥

चिरविस्मृतसंग्रामः प्रार्थये भगवन्युधि ।

अमीषां भुजदण्डानां रणकण्डूतिखण्डनम् ॥ १९.११८४ ॥

तं विहस्याब्रवीद्देवः शूलपाणिर्भुजोचितः ।

भविता तव संग्रामः केतुभङ्गेन सूचितः ॥ १९.११८५ ॥

श्रुत्वैतत्साहसं हर्षनिर्भरो भूरिविक्रमः ।

बाणः स्वभवनं गत्वा मन्त्रिणे तन्न्यवेदयत् ॥ १९.११८६ ॥

तमुवाचाथ कुम्भाण्डो मन्त्री मतिमतां वरः ।

अहो नु फलशून्योऽयं राजन्युद्धादरस्तव ॥ १९.११८७ ॥

त्रैलोक्यलक्ष्मीः संप्राप्ता जिताः सर्वे दिवौकसः ।

किं युद्धेन प्रवृद्धानामपि लोलौ जयाजयौ ॥ १९.११८८ ॥

इति वादिनि कुम्भाण्डे बाणे च समरोत्सुके ।

ध्वजः पपात दैत्यश्रीक्रीडाशैल इवोच्छ्रितः ॥ १९.११८९ ॥

केतौ निपतिते तस्मिन्दानवक्षयशंसिनि ।

घोरेषु दुर्निमित्तेषु प्रादुर्भूतेषु सर्वतः ॥ १९.११९० ॥

प्रहर्षविवशे बाणे पानक्रीडाविलासिनि ।

नयचक्षुषि कुम्भाण्डे चिन्तासंतापिताशये ॥ १९.११९१ ॥

कदाचिद्बाणनगरे सर्वर्तुकुसुमे वने ।

विजहाराचलसुतासखश्चन्द्रर्धशेखरः ॥ १९.११९२ ॥

गीतनृत्यकलालोलगन्धर्वाप्सरसां गणैः ।

सेव्यमानस्य संभोगविभ्रमः शुशुभे विभोः ॥ १९.११९३ ॥

हासाय चित्रलेखाख्या तत्र देवविलासिनी ।

नाट्यं चकार विधिवत्सेवितुं पार्वतीपतिम् ॥ १९.११९४ ॥

नर्मक्रीडाविनोदेन परिहासविडम्बनैः ।

अप्सरोविहितैस्तैस्तैर्जहास भववल्लभा ॥ १९.११९५ ॥

तत्रोषा नाम बाणस्य कन्या कुवलयेक्षणा ।

ददर्श शिवयोः क्रीडाविलासममरोत्सवम् ॥ १९.११९६ ॥

तां वीक्ष्य सादरां देवी बभाषे ललिताननाम् ।

उषे त्वमपि कान्तेन केलिसक्ता भविष्यसि ॥ १९.११९७ ॥

वैशाखे हर्म्यसक्ताया द्वादश्यां निशि येन ते ।

भविता संगमः स्वप्ने स ते प्राग्जातिवल्लभः ॥ १९.११९८ ॥

इत्युक्ता बाणतनया भवान्या भक्तिशालिनी ।

जगामान्तःपुरं हर्षव्याकोशनयनोत्पला ॥ १९.११९९ ॥

किमेतदिति पृष्टेव शिञ्जानमणिभूषणैः ।

तां सोत्कम्पकचन्यस्तहस्तां लज्जानताननाम् ॥ १९.१२०० ॥

पप्रच्छ चित्रलेखाख्या कुम्भाण्डदुहितासखी ।

कुतस्ते भयमुत्पन्नं किं लतेव प्रकम्पसे ॥ १९.१२०१ ॥

तनया ह्यसि बाणस्य जम्भारिभयकारिणः ।

इत्युषा सहसा सख्या पृष्टा तां प्रत्यभाषत ॥ १९.१२०२ ॥

मुकेन्दौ लाञ्छनच्छायां कुर्वाणामञ्जनास्रुभिः ।

कथं नु दूषिता नाम पूज्यासि जनमानिनी ॥ १९.१२०३ ॥

उत्सहे जीवितं जातु कलङ्कितकुला सती ।

इति प्रलापमुखरां सखीं तामवदन्मुदा ॥ १९.१२०४ ॥

स्वप्नसङ्गेन दूष्यन्ते न मुग्धे कुलयोषितः ।

किं न स्मरसि यद्गौर्या सूचितं केलिकानने ।

स्वप्ने हृदयचौरस्ते भविता भीरु वल्लभः ॥ १९.१२०५ ॥

इति संस्मारिता स्वैरं सहसा चित्रलेखया ।

प्रदध्यौ वलल्भं हर्षान्मनसामृतदीधितिम् ॥ १९.१२०६ ॥

अभिलाषरसस्तस्या नवः कोऽपि व्यवर्धत ।

सहसा येन जज्वाल प्रबलो मन्मथानलः ॥ १९.१२०७ ॥

तां वीक्ष्य संततोच्छ्वासधूसराधरपल्लवाम् ।

लतामिवातपक्लान्तां चित्रलेखावदत्सखीम् ॥ १९.१२०८ ॥

सखि कोऽयमनालेख्यचित्रत्रकौतुकविभ्रमः ।

स्वप्नदृष्टजने रागः स्वपुष्पोत्तंसशेखरः ॥ १९.१२०९ ॥

दर्पणप्रतिमालाभस्तारकाचन्द्रयाचनम् ।

हेवाकः स्वप्नदृष्टे च बाले बालमनोरथः ॥ १९.१२१० ॥

न जानीमः स कः क्वास्ते कथं वा केन लभ्यते ।

अवश्यमेव भविता स्वयं ते तत्समागमः ॥ १९.१२११ ॥

अथवा सुरगन्धर्वकिन्नरोरगरक्षसाम् ।

वपूंषि भूमिपानां च त्रैलोक्यान्तरवर्तिनाम् ॥ १९.१२१२ ॥

पटान्ते निर्विशेषाणि लिखित्वा सखि मायया ।

दर्शयामि तव क्षिप्रं ततो जानीहि वल्लभम् ॥ १९.१२१३ ॥

इत्युक्त्वा सप्तरात्रेण लिखित्वा सकलान्पटे ।

अचित्रयच्चित्रलेखा सख्याः सर्वानुकारिणी ॥ १९.१२१४ ॥

चित्रपट्टगतान्वीक्ष्य सुरभोगिनृमानुषान् ।

ददर्श वृष्णिवीराणां मध्ये गोविन्दसुन्दरम् ॥ १९.१२१५ ॥

अनिरुद्धं तमालोक्य विस्मयानन्दनिर्भरा ।

उषा बभाषे कौमारव्रतचौरो ममैष सः ॥ १९.१२१६ ॥

सखि प्राज्यभुजः कान्तः कोऽयं कमललोचनः ।

प्रसह्यापहृतं येन धैर्यं मे मनसा सह ॥ १९.१२१७ ॥

चित्रलेखा निशम्यैतदुवाच रुचिरस्मिता ।

अयं सखि मुरारातेः कृष्णस्य तनयात्मजः ॥ १९.१२१८ ॥

वीरोऽनिरुद्धस्ते देव्यादिष्टो हृदयवल्लभः ।

स्वप्ने त्वां रतिमन्वेष्टुं नूनं कामोऽयमागतः ॥ १९.१२१९ ॥

विस्मितैर्विक्रमेणास्य संग्रामेषु सुरासुरैः ।

खर्वीक्रियन्ते सुभटाः सबान्धवमनोरथाः ॥ १९.१२२० ॥

श्रुत्वैतन्मन्मथाविष्टा प्रतिमान्यस्तलोचना ।

उषावदद्विना कान्तं नाहं जीवितुमुत्सहे ॥ १९.१२२१ ॥

यदि तेर्ऽथो मम प्राणैर्यदि तेऽहं प्रिया सखी ।

तदनेन कुरु क्षिप्रं कान्तेन मम संगमम् ॥ १९.१२२२ ॥

इति ब्रुवाणामसकृच्चित्रलेखा जगाद ताम् ।

पितुस्ते शोणितपुरं यथा सुभटरक्षितम् ॥ १९.१२२३ ॥

तथैव द्वारका वीरैर्वृष्णिबिः परिपालिता ।

आगम्या च परस्यापि विकटाट्टालमालिनी ॥ १९.१२२४ ॥

ततः सखि कथं नाम वीरं ते जीवितेश्वरम् ।

प्रसह्याहर्तुमबलाजनो जातु प्रगल्भते ॥ १९.१२२५ ॥

तथापि त्वत्प्रियायैषां गच्छामि गगनेऽग्रगा ।

सिद्धिस्तु देव्यैवादिष्टा त्वद्भाग्येषु सखि स्थिता ॥ १९.१२२६ ॥

इत्युक्त्वा खं विवेशाशु सा रत्नाभरणांशुभिः ।

घनश्रीरिव कुर्वाणा शक्रचापचिता दिशः ॥ १९.१२२७ ॥

मुहूर्ते बाणनगरात्तृतीये सा गता जवात् ।

क्षणेन द्वारकां प्राप कान्त्या कैलासहासिनीम् ॥ १९.१२२८ ॥

तत्रोरुरत्नवललक्षीप्रभाप्रोद्भासिताम्बरम् ।

अनिरुद्धस्य भवनं विवेशालक्षिताकृतिः ॥ १९.१२२९ ॥

तत्र बालमृगाक्षीभिः कान्ताभिः परिवारितम् ।

अनिरुद्धं मनोजन्मलीलाललितचेष्टितम् ॥ १९.१२३० ॥

ददर्श स्निग्धललना कटाक्षशबलद्युतिम् ।

रतिकर्णोत्पलाघातलग्नच्छदमि वस्मरन् ॥ १९.१२३१ ॥

अङ्गनालिङ्गनालीनस्तनपत्त्रलताङ्कितम् ।

धम्मिल्लकुसुमैर्व्याप्तं पारिजातमिवापरम् ॥ १९.१२३२ ॥

तं वीक्ष्य विक्रमोदारं शृङ्गारललिताकृतिम् ।

अचिन्तयच्चित्रलेखा मुहूर्तं जातसाध्वसा ॥ १९.१२३३ ॥

अहो बत महत्यस्मिन्नुद्याताहं ससंशये ।

कार्ये प्रियसखीप्रीत्या प्रेम्णि वा किं विचिन्त्यते ॥ १९.१२३४ ॥

इति ध्यात्वा मुहुर्वीरा सा तमोविद्यया पुरः ।

आच्छाद्य स्त्रीगणं सर्वं प्र(प्रा)द्युम्न(म्नि)मनयत्क्षणात् ॥ १९.१२३५ ॥

संकल्पशक्तिरिव सा मायया क्षिप्रगामिनी ।

प्रविश्य शोणितपुरं हर्म्यस्थां प्रययौ सखीम् ॥ १९.१२३६ ॥

उषापि वल्लभावाप्तिमनोरथशताकुला ।

सहसा दयितं वीक्ष्य सख्यातीतं विहायसा ॥ १९.१२३७ ॥

पीयूषप्लावितेवाशु हर्षलज्जाभयाकुला ।

किं करोमीति संभ्रान्ता कम्पमाना लतेव सा ॥ १९.१२३८ ॥

अनिर्वाच्यदशां याता शिञ्जानमणिभूषणा ।

प्रहृष्टा सा तमादाय दयितं गुह्यमन्दिरम् ॥ १९.१२३९ ॥

विवेश जनसंचारभीता तरललोचना ।

स्रस्तया बाणभीत्येव त्यक्ता मेखलया स्वयम् ॥ १९.१२४० ॥

तत्र सुस्फारमन्दारशेखरं लोलकुण्डलम् ।

तारतारावलीचारुहारं ताराधिपप्रभम् ॥ १९.१२४१ ॥

शृङ्गारदीक्षागुरुणा तेन साङ्गस्मरत्विषा ।

उषा सस्मार संभोगसौभाग्यविभवं रतेः ॥ १९.१२४२ ॥

शृङ्गारदीक्षागुरुणा तेन साङ्गस्मरत्विषा ।

उषा सस्मार संभोगासौभाग्यविभवं रतेः ॥ १९.१२४३ ॥

अनिरुद्धोऽपि तां प्राप्य वल्लभां भुवि दुर्लभाम् ।

मेने भाजनमात्मानं स्मरसाम्रज्यसंपदाम् ॥ १९.१२४४ ॥

रममाणस्तया गूढं तत्र प्रद्युम्नसंभवः ।

लक्षणैर्बहुभिर्ज्ञातः कन्यान्तःपुररक्षिभिः ॥ १९.१२४५ ॥

तनयादूषणरुषा निर्दिष्टा बलिसूनुना ।

बाणेन किंकरा घोराः प्राद्युम्निं हन्तुमाययुः ॥ १९.१२४६ ॥

दंष्ट्राविकटवक्त्रोग्रबद्धभ्रुकुटिभीषणान् ।

वीरोऽनिरुद्धस्तान्दृष्ट्वा कृष्टघोरासिकार्मुकान् ॥ १९.१२४७ ॥

उत्थाय समरारम्भनिःसंरम्भपराक्रमः ।

उत्थाय द्वारपरिघं मृगान्सिंह इवाद्रवत् ॥ १९.१२४८ ॥

कान्ताकटाक्षदृष्टस्य तस्शौर्यनिधेर्वपुः ।

वीरशृङ्गाररभसं बभौ मन्मथरूपिणः ॥ १९.१२४९ ॥

शस्त्रवृष्टिं तदुत्सृष्टां पुष्पमालामिवोरसा ।

आदाय दानवभटाञ्जघान घननिःस्वनः ॥ १९.१२५० ॥

ते तत्प्रहाराभिहता भग्नभीषणविग्रहाः ।

हतशेषा ययुर्भीता यत्र बाणो रणोत्कटः ॥ १९.१२५१ ॥

पुरंदरपुरध्वंससाक्षिणां कोऽयमागतः ।

संभ्रमः कोपसंमोहजनकः कातरोचितः ॥ १९.१२५२ ॥

क्रियतामादर शौर्ये यशःकुसुममाधवे ।

त्रासोऽयमभिमानाद्रिवज्रपातो हि दुःसहः ॥ १९.१२५३ ॥

वचोभिरिति वीराणां ते बाणस्य च शासनात् ।

अनिरुद्धं सुमहता सैन्येन पुनराद्रवन् ॥ १९.१२५४ ॥

आमुक्तहेमकवचैः प्रदीप्तविविधायुधैः ।

निशि दीप्तौषधिवनैर्गिरीन्द्रैरिव जङ्गमैः ॥ १९.१२५५ ॥

युयुधे युधि संरब्धैश्चक्रायुधसुतात्मजः ।

सोत्कम्पकुचविन्यस्तहस्तामालोक्यन्प्रियाम् ॥ १९.१२५६ ॥

आदाय तत्समुत्सृष्टं खड्गं चर्म च भास्वरम् ।

मण्डलानि चरन्वीरः स चकर्त रणे रिपून् ॥ १९.१२५७ ॥

तेन कृत्तशिरःस्कन्धभुजजानुकरोदराः ।

पेतुर्महाघनाः कल्पवातेनोन्मथिता इव ॥ १९.१२५८ ॥

विद्रुते दानवानीके भग्नस्यन्दनकुञ्जरे ।

निवर्तितबलाम्भोधिर्बाणः स्वयमदृश्यत ॥ १९.१२५९ ॥

कुम्भाण्डाहितवल्गेन सहस्राश्वेन भास्वता ।

रथेन भीमनादेन सहस्राश्वेन भाश्वता ।

रथेन भीमनादेन युक्तस्त्रिदशमर्दिना ॥ १९.१२६० ॥

दोःसहस्रसमुद्भ्रान्तदीप्तायुधवरोत्कटः ।

फणरत्नोग्रभुजगव्याप्तशृङ्ग इवाचलः ॥ १९.१२६१ ॥

मुकुटेनार्कवर्णेन रत्नज्वालाजटाजुषा ।

तर्जयन्निव तेजांसि सितपट्टाट्टहासिना ॥ १९.१२६२ ॥

मार्तण्डमण्डलोच्चण्डकुण्डलोदग्रवर्चसा ।

भ्रूभङ्गभीमवक्त्रेण संत्रासितजगत्त्रयः ॥ १९.१२६३ ॥

निशाकरकरोदारतारहारतरङ्गितः ।

विस्फारनिर्झरोद्गार इव नीलधराधरः ॥ १९.१२६४ ॥

उत्तप्तकाञ्चनच्छायश्मश्रुकेशविभूषणः ।

क्रोधनिर्घृष्टदन्ताग्रजातज्वाल इवादितः ॥ १९.१२६५ ॥

गर्जन्तं तिष्ठ तिष्ठेति प्रलयाम्भोजनिःस्वनम् ।

तमापतन्तमालोक्य प्राद्युम्निर्न व्यकम्पत ॥ १९.१२६६ ॥

बाणबाहुवनोन्मुक्तैर्बाणजालैर्निरन्तरैः ।

छादितोऽर्क इवाम्भोदैर्निर्विभागैर्बभूव सः ॥ १९.१२६७ ॥

तयोर्हरिहरण्याक्षरणस्मरणहेतुताम् ।

भुवनाकम्पनाकम्पमगमद्युद्धमुद्धतम् ॥ १९.१२६८ ॥

अनिरुद्धोऽथ खड्गेन बाणबाणपरम्पराम् ।

छित्त्वास्य लघुसंचारी चिच्छेद रथकूबरम् ॥ १९.१२६९ ॥

ज्वालाकुलां ततः शक्तिं शोणपट्टाङ्कितामिव ।

चिक्षेप दानवपतिस्तस्मै भोगिवधूमिव ॥ १९.१२७० ॥

हस्तेन कालदंष्ट्राभां तामेवादाय धैर्यभूः ।

प्राहिणोद्दानवेन्द्राय दाशार्हेऽद्भुतविक्रमः ॥ १९.१२७१ ॥

बाणस्य भित्त्वा सा देहं विवेश धरणीतलम् ।

शक्त्या विदारितं दृष्ट्वा कुम्भाण्डो बाणमब्रवीत् ॥ १९.१२७२ ॥

मायामाश्रित्य युध्यस्व दुर्जयोऽयमुपेक्षितः ।

निःसंशयजयावाप्तिर्द्युते युद्धे च मायिनाम् ॥ १९.१२७३ ॥

इति कुम्भाण्डवचसा बाणो मायां विमोहनीम् ।

आदाय तामसीं घोरां सहसान्तरधीयत ॥ १९.१२७४ ॥

अदृश्यः स महाभागैर्बाणैर्भुजगविग्रहैः ।

नभोगतस्तं विदधे विष्टिताङ्गं विषोल्बणैः ॥ १९.१२७५ ॥

रुफुरत्फणामणिज्वालाज्वलितैर्वेष्टितोऽहिभिः ।

स बभौ शबलच्छायश्चन्दनद्रुमविभ्रमः ॥ १९.१२७६ ॥

नागपाशनिरुद्धस्य धैर्यनिष्कम्पचेतसः ।

अनिरुद्धस्य विदधे वधे दैत्यपतिर्मतिम् ॥ १९.१२७७ ॥

महाप्रभावः कोऽप्येष नाज्ञातो वधमर्हति ।

इति कुम्भाण्डवचसा विरराम बडेः(लेः) सुतः ॥ १९.१२७८ ॥

अत्रान्तरे द्वारकायां तारमन्तःपुरोदरे ।

हृतोऽनिरुद्धः केनापि प्रोच्चचारेति निःस्वनः ॥ १९.१२७९ ॥

मुहुर्विमोहविवशास्तत्र त्रस्ता मृगीदृशः ।

अनिरुद्धस्य दयिताः शुशुचुः शोकविह्वलाः ॥ १९.१२८० ॥

अथ वृष्णिप्रवीराणां कैटभारिसभान्तरे ।

भेरीनिनादहूतानां समाजः सुमहानभूत् ॥ १९.१२८१ ॥

ततो निवातनिष्कम्पसप्तसागरसंनिभम् ।

ददृशुः साश्रुनेत्रास्ते चिन्तास्तिमितमच्युतम् ॥ १९.१२८२ ॥

शोकमोहविषाक्रान्ते मूके यादवमण्डले ।

उवाच विपृथुर्धीमान्विष्णुं जिष्णुं सुरद्विषाम् ॥ १९.१२८३ ॥

कोऽयं तवापि भगवन्भुवनाभयदायिनः ।

अचिन्त्यमहासश्चितासंतापप्रसरो नवः ॥ १९.१२८४ ॥

न हि नाम महाम्भोधिगम्भीरोदारचेतसाम् ।

भवन्ति सुखदुःखेषु हर्षशोकपरिप्लवाः ॥ १९.१२८५ ॥

यदि देव त्वमप्येवं चिन्तासंतापितोऽच्युतः ।

तदिदानां निरालम्बा धैर्यस्य स्खलिता गतिः ॥ १९.१२८६ ॥

त्रैलोक्यरक्षां निक्षिप्य त्वद्भुजे जम्भसूदनः ।

शेते शचीकुचाभोगसभोगानन्दनिर्वृतः ॥ १९.१२८७ ॥

इति तेनोक्तमाकर्ण्य कृष्णो गम्भीरमन्थरम् ।

समादधे गिरं वैरियशोहंसकुलाम्बुदः ॥ १९.१२८८ ॥

परावज्ञा निकारेण करोति हृदये पदम् ।

चिन्ताभीमानिनां सत्यमविद्येव शरीरिणाम् ॥ १९.१२८९ ॥

अयं यदुकुलस्याद्य केनाप्युत्सिक्तचेतसा ।

पातितश्चरणो मूर्ध्नि रथ्यापङ्कपरिप्लुतः ॥ १९.१२९० ॥

अनिरुद्धे हृते यातः पुरोमन्ये महीभुजाम् ।

उपहासकथामात्रपात्रतां नः पराक्रमः ॥ १९.१२९१ ॥

अविज्ञातेन विहिते निकारेऽस्मिन्विदारणे ।

किं कुर्मः कोपतुल्योग्रदण्डैर्गगनताडनम् ॥ १९.१२९२ ॥

चाराश्चरन्तु सर्वत्र बाह्याभ्यन्तरचारिणः ।

आहुकस्याज्ञया तूर्णमनिरुद्धोपलब्धये ॥ १९.१२९३ ॥

इत्युक्ते कंसरिपुणा देवर्षिस्तत्र नारदः ।

अदृश्यत निधिर्धाम्नां कलिकेलिविशारदः ॥ १९.१२९४ ॥

स चिन्तास्तिमितं दृष्ट्वा जगन्नाथमचिन्तयत् ।

अहो नु बालशफरोत्फालेनाकुलितोऽम्बुधिः ॥ १९.१२९५ ॥

इत्याकलयतस्तस्य पाद्यासनपुरः सराम् ।

पूजां जनार्दनश्चक्रे पूजितः सोऽप्यभाषत ॥ १९.१२९६ ॥

अहो बत विमोहो वः प्रतिपक्षः पराक्रमे ।

लक्ष्यते येन जानीध्वमनिरुद्धस्य चेष्टितम् ॥ १९.१२९७ ॥

अनिरुद्धस्य बाणेन बलिना बलिसूनुना ।

वृत्तः प्रवृत्तशस्त्रास्त्रभैरवः समरोत्सवः ॥ १९.१२९८ ॥

कृष्ण पौत्रोऽनिरुद्धस्ते हृतो दैत्येन्द्रकन्यया ।

मन्ये मुह्यति यां दृष्ट्वा स्मरोऽपि स्मरपीडितः ॥ १९.१२९९ ॥

सहस्रबाहोर्बाणस्य बलिसूनोः सुरद्विषः ।

उषा नामाम्बुजाक्षी सा लावण्यनलिनी सुता ॥ १९.१३०० ॥

स स्वैरकामुकं पुत्र्या ज्ञात्वा हृदयनन्दनम् ।

दृष्ट्वा च दुर्जयं युद्धे बबन्ध फणिमण्डलैः ॥ १९.१३०१ ॥

तदितः शोणितपुरं बाणस्य गगनाग्रगम् ।

गन्तव्यं भवता योद्धुं सामसाध्या न दानवाः ॥ १९.१३०२ ॥

अमर्त्यभूमिर्दुर्लङ्घ्या तार्क्ष्यमारुह्य गम्यताम् ।

यस्यां त्रिदशहृद्बाणो बाणो नामाशनिर्द्विषाम् ॥ १९.१३०३ ॥

उक्त्वेति याते देवर्षौ देवोऽपि मधुसूदनः ।

हर्षविस्मयकोपानां तुल्यां प्राप विधेयताम् ॥ १९.१३०४ ॥

ततः प्रदध्यौ भगवान्गारुडं गरुडध्वजः ।

स च ध्यातोर्ऽकलंक्षाभः सहसा प्रत्यदृश्यत ॥ १९.१३०५ ॥

तमारुरोह विश्वात्मा हर्म्यारोहणलीलया ।

बलदेवसखः श्रीमान्रुक्मिणीतनयानुगः ॥ १९.१३०६ ॥

स बभौ विषदश्यामः कौस्तुभाभरणो विभुः ।

मध्यावतीर्णसूर्यस्य नभसोऽभिभवन्प्रभाम् ॥ १९.१३०७ ॥

चतुर्भुजस्य विभभुस्तस्य प्राज्यभुजद्रुमाः ।

चक्रप्रभापल्लविताः पाञ्चजन्यांशुपुष्पिताः ॥ १९.१३०८ ॥

व्रजन्स पवनोद्धूतपीताम्बरमनोहरः ।

तार्क्ष्यपक्षप्रबाचक्रैश्चक्रे हेमप्रभं नभः ॥ १९.१३०९ ॥

सर्वाभरणरत्नोषु बिम्बितैः कौतुकागतैः ।

सिषेवे व्योमतटनीवर्तितोष्णीषपल्लवैः ॥ १९.१३१० ॥

सुरविद्याधरवधूपाणिपद्मवनोज्झितैः ।

मन्दारवृन्दैरभवंस्तस्य स्रग्दामविभ्रमाः ॥ १९.१३११ ॥

रुद्धोऽनिरुद्धः समरे यदा वीरः सहोषया ।

भुजङ्गपाशैः स्वपुरे बाणेन बलशालिना ॥ १९.१३१२ ॥

दुर्गसंतारिणीं दुर्गां तदा स शरणं गतः ।

महेन्द्रोपेन्द्रभगिनीं दिव्यैस्तुष्टाव नामभिः ॥ १९.१३१३ ॥

नौमि कंसासुरैश्वर्यतमःपटलचन्द्रिकाम् ।

पूर्णचन्द्राननां देवीं दुष्टसंमोहनक्षमाम् ॥ १९.१३१४ ॥

दीप्तशूलप्रभाजालभीषणां ललिताकृतिम् ।

वेल्लद्द्विषोल्बणव्यालामिव चन्दनवल्लरीम् ॥ १९.१३१५ ॥

महिषन्यस्तचरणां श्यामां हारविभूषिताम् ।

सकालियह्रदां फेनहासिनीं यमुनामिव ॥ १९.१३१६ ॥

पाणिसंसक्तभुजगाभोगनीलासिवल्लरीम् ।

एकपद्मोदरोद्गच्छदलिमालामिवाब्जिनीम् ॥ १९.१३१७ ॥

मयूरपक्षाभरणैः शबलैर्मेचकप्रभैः ।

सेवितां प्रावृषमिव स्फुरदिन्द्रायुधैर्घनैः ॥ १९.१३१८ ॥

करालकेशविस्फारशुद्धसंचारलालसाम् ।

हिमाद्रिशिखरोद्भूतां कालागुरुलतामिव ॥ १९.१३१९ ॥

कवीन्द्रमानसावासराजहंसीं सरस्वतीम् ।

विचित्रमधुरोदारशब्दां चारुपदक्रमाम् ॥ १९.१३२० ॥

संसारमरुसंतापनिर्वापणसमुद्यताम् ।

संवित्समरसानन्दसुधास्यन्दतरङ्गिणीम् ॥ १९.१३२१ ॥

रणसंरम्भसंभारगम्भीरारम्भविभ्रमाम् ।

निशुम्भशुम्भारवष्टम्भभीतसंभावितामराम् ॥ १९.१३२२ ॥

संध्यामवन्ध्यां विन्ध्याद्रिवासिनीं वासवानुजाम् ।

शशिखण्डशिखण्डाङ्कां मुण्डमण्डलमण्डिताम् ॥ १९.१३२३ ॥

फुल्लोत्पलवनश्यामां फुल्लोत्पलविलोचनाम् ।

गम्भीरनाभिकुहरामिभकुम्भनिभस्तनीम् ॥ १९.१३२४ ॥

धन्यां कात्यायनीं चण्डां चामुण्डां खण्डिताहिताम् ।

शर्वाणीं शर्वरीं शर्वां सिद्धगन्धर्वसेविताम् ॥ १९.१३२५ ॥

कालसंकर्षिणीं घोरां त्रिजगद्ग्रामलालसाम् ।

कमलासनकङ्कालमालाकलितशेखराम् ॥ १९.१३२६ ॥

शिवां शिवप्रदां शान्तां शिवकान्तां शताननाम् ।

त्रिनेत्रां सौम्यवदनां मदनारिमदप्रभाम् ॥ १९.१३२७ ॥

स्फीतफेनसुधाम्भोधिदुकूलां रत्नमेखलाम् ।

कराकलितहेमाद्रिमातुलङ्गांशुपिङ्गलाम् ॥ १९.१३२८ ॥

अक्षसूत्रकृतावृत्तनक्षत्रमणिमालिकाम् ।

पाणिसक्तसुधाम्भोधिपूर्णब्रह्माण्डकर्पराम् ॥ १९.१३२९ ॥

संवित्प्रकाशविषदव्याकोशाकाशदर्पणाम् ।

शेषादिकुलभोगीन्द्रहारकेयूरकङ्कणाम् ॥ १९.१३३० ॥

तारकामौक्तिकस्मेरशशिमार्तण्डमण्डलाम् ।

त्रिशृङ्गरत्नशैलेन्द्रविटङ्कमुकुटोज्ज्वलाम् ॥ १९.१३३१ ॥

कल्लोललोस्वःसिन्धुधवलोष्णीषभूषिताम् ।

सेन्द्रायुधक्षयाम्भोदमायूरच्छत्त्रविभ्रमाम् ॥ १९.१३३२ ॥

कन्दाग्रकुण्डलितनाभिमृणालदण्डहृत्पुण्डरीकनिबिडामृतपानशौण्डाम् ।

भृङ्गाङ्गनामिव सदोदितनादशक्तिसंवेद्यवेद्यजननीं जननीं प्रपद्ये ॥ १९.१३३३ ॥

- - - - - दुर्गास्तोत्रम् ॥ ४२ ॥ *****

इति स्तुता भगवती भक्त्या प्रद्युम्नसूनुना ।

सांनिध्यमकरोत्साक्षाद्दुर्गा दशभुजा पुरः ॥ १९.१३३४ ॥

भुजङ्गपञ्जरं घोरं पाणिना कमलत्विषा ।

दुर्भेद्यं स्फोटयित्वास्य वज्रप्राकारसंनिभम् ॥ १९.१३३५ ॥

निजतेजोभिरभितः स्फीतैरनुसृता मुहुः ।

आयूंषि दितिजेन्द्राणां कर्षन्तीवाविशन्नभः ॥ १९.१३३६ ॥

अत्रान्तरे महावेगो भगवान्गारुडध्वजः ।

बाणस्य शोणितपुरं प्राप पावकरक्षितम् ॥ १९.१३३७ ॥

अष्टबाहुरभूद्भीमविग्रहः कालियान्तकः ।

शङ्खचक्रगदापद्मशरशार्ङ्गासिचर्मभृत् ॥ १९.१३३८ ॥

सहस्रशिखरस्फारतुषारगिरिसंनिभः ।

सहस्रकायवदनो बभूव च हलायुधः ॥ १९.१३३९ ॥

सनत्कुमारकल्पश्च प्रद्युम्नः समपद्यत ।

तेष्वेव पृथुरूपेषु पृथिवी समकम्पत ॥ १९.१३४० ॥

तार्क्ष्यपक्षानिलाक्षेपक्षुम्भ(त्)स्तब्धाब्धिमण्डलः ।

उदभूज्जगतां कोऽपि प्रलयारम्भसंभ्रमः ॥ १९.१३४१ ॥

बभाषे विस्मयाविष्टस्ततः कृष्णं हलायुधः ।

कस्मादकस्मात्संवृत्ताः कनकद्युतयो वयम् ॥ १९.१३४२ ॥

तमब्रवीत्तार्क्ष्यकेतुर्बाणस्य पुररक्षिता ।

अग्निराहवनीयोऽत्र पुरोऽस्मानुद्यतः क्रुधा ॥ १९.१३४३ ॥

जगत्यकालसंध्येव तेजसास्य विभाव्यते ।

सुपर्णायत्तमधुना कार्यमेतद्भविष्यति ॥ १९.१३४४ ॥

इत्युक्ते शौरिणा तार्क्ष्यः पक्षाक्षेपधुताम्बुधिः ।

गङ्गामादाय विदधे प्रशमं जातवेदसः ॥ १९.१३४५ ॥

ततो विस्फारशिखराकारज्वालाजटाकुलाः ।

रुद्रस्यानुचरा घोरा वह्नयोऽन्ये समुद्ययुः ॥ १९.१३४६ ॥

तेषां मध्येऽङ्गिरा दीप्तशूलज्वालाविभूषणः ।

सुमेरुरिव मार्तण्डमण्डलाङ्कः समाबभौ ॥ १९.१३४७ ॥

तस्यार्धचन्द्रेण हरिः प्रहर्तुः शूलमुत्कटम् ।

चिच्छेद स प्रयत्नस्य वामो विधिरिवेप्सितम् ॥ १९.१३४८ ॥

स्थूलाकर्णेन निहतः स महास्त्रेण शौरिणा ।

पपात पातितरिपुर्निर्दग्धोऽग्निरिवाग्निना ॥ १९.१३४९ ॥

ततो भग्नेऽग्निगहने बाणानीके ससंभ्रमे ।

दध्मौ निजयशः शुद्धं पाञ्चजन्यं जनार्दनः ॥ १९.१३५० ॥

तस्य शब्देन महता वातस्कन्धविमर्दिना ।

बभूव भुवनाभोगसंघट्टविषमः स्वनः ॥ १९.१३५१ ॥

ततः प्रविश्य बाणस्य नगरं गरुडध्वजः ।

अवाप युद्धसंनद्धक्षुब्धदैत्यमहार्णवम् ॥ १९.१३५२ ॥

तदपारं हरिः सैन्यं पावकास्त्रशिलाशितैः ।

व्याप्तं चकार माञ्जिष्ठैर्बद्धैर्वध्यपटैरिव ॥ १९.१३५३ ॥

ततस्तूर्णं रणरसादवतीर्य गरुत्मतः ।

विबुधारातिभिर्वीरो युयुधे लाङ्गलायुधः ॥ १९.१३५४ ॥

शुद्धस्तमालमलिने स दैत्यसदने बभौ ।

ऐरावण इवादभ्रनीलाभ्रे नभसि भ्रमन् ॥ १९.१३५५ ॥

संकर्षणहलाकृष्टास्ततस्तन्मुसलाहले ।

निपेतुर्दानवाः सर्वे वज्रभिन्ना इवाचलाः ॥ १९.१३५६ ॥

अवतीर्य सुपर्णाग्रात्प्रद्युम्नेन सहाच्युतः ।

जहार शरजालेन दैत्यजीवविहङ्गमान् ॥ १९.१३५७ ॥

ते चण्डचञ्चुचरणैः पक्षाक्षेपैश्च पीडिताः ।

क्षपिताः पक्षिराजेन क्षणं शर्म न लेभिरे ॥ १९.१३५८ ॥

ततो भस्मप्रहरणास्त्रिमुखस्त्रिशिखस्त्रिपात् ।

निद्राव्याघूर्णितातामनेत्रो जृम्भालसः स्वयम् ॥ १९.१३५९ ॥

शीतोद्धतैः खरतरैर्लोमभिर्मकरोपमः ।

भ्रमग्लानिपरिम्लानधूसरोऽदृश्यत ज्वरः ॥ १९.१३६० ॥

स रौहिणेयमाहूय चित्रमण्डलचारिणम् ।

कम्पमानतनुः कोपात्तत्क्षये विदधे मतिम् ॥ १९.१३६१ ॥

चिक्षेप दुःसहं तस्मै भस्मापस्मारसंनिभः ।

वक्षोवलक्षं रामस्य येन व्याप्तमभूत्क्षणात् ॥ १९.१३६२ ॥

तद्वक्षसः प्रदीप्तोत्थं भस्म मेरुतटे पतत् ।

ददाह पृथुटाङ्कारि शिखरं सहसा ज्वलत् ॥ १९.१३६३ ॥

शेषेण दीप्तसर्वाङ्गो भस्मना विस्मृतस्मृतिः ।

स्खलद्गतिस्तालकेतुः परं क्षीब इवाबभौ ॥ १९.१३६४ ॥

सोऽब्रवीत्कृष्ण कृष्णाहं प्रदीप्तो न लभे धृतिम् ।

कुलालचक्रविभ्रान्तं पश्यामि निखिलं जगत् ॥ १९.१३६५ ॥

इति ब्रुवाणमभ्येत्य शार्ङ्गधन्वा हलायुधम् ।

भस्मशान्त्यै पिरष्वज्य जग्राह ज्वरमोजसा ॥ १९.१३६६ ॥

स तेन समरे घोरे समाक्रान्तः क्रुधा ज्वलन् ।

ज्वरश्चिक्षेपे मुष्टिभ्यां भस्म ज्वालाजटाकुलम् ॥ १९.१३६७ ॥

क्षणं प्रदीप्तः कृष्णोऽपि प्रशान्ताग्निश्च तत्क्षणात् ।

तुल्यं तेनाहतो दोर्भिस्त्रिभिर्नाकम्पताच्युतः ॥ १९.१३६८ ॥

स कृष्णज्वरयोर्घोरः संग्रामो वज्रनिःस्वनः ।

बभूव सर्वभूतानां भयकृल्लोमहर्षणः ॥ १९.१३६९ ॥

काञ्चनाभरणच्छाया बभूवुर्ज्वविग्रहे ।

विनिर्गता इव ज्वालाः कृष्णदोर्दण्डपीडनात् ॥ १९.१३७० ॥

निपीड्य निबिडं दोर्भिः क्षितौ क्षिपत्तः स शौरिणा ।

अलक्षितोऽविशत्क्षिप्रं तच्छरीरं समीरवत् ॥ १९.१३७१ ॥

तेनाविष्टः श्वसञ्जृम्भाभ्रमनिद्रालसः स्खलन् ।

क्षणं बभूव भूतात्मा प्रोद्धूताद्भुतविप्लवः ॥ १९.१३७२ ॥

अहो बताप्रतिहता वस्तुशक्तिर्गरीयसी ।

जगन्नातेऽपि यद्भेजे ज्वरसंस्पर्शविक्रियाम् ॥ १९.१३७३ ॥

सोऽसृजद्वैष्णवं घोरं ज्वरं पूर्वज्वरापहम् ।

कृष्णस्तेन ज्वरेणाशु पुनः पूर्वोऽभवज्ज्वरः ॥ १९.१३७४ ॥

तं हन्तुमुद्यतो यावत्कालियारिः स्वयं क्रुधा ।

उच्चचार वचस्तावद्गगनाद्घोरनिःस्वनम् ॥ १९.१३७५ ॥

संरक्ष्यो भगवन्नेष रुद्रस्यानुचरो ज्वरः ।

श्रुत्वेति विररामाशु तद्वधान्मधुसूदनः ॥ १९.१३७६ ॥

कृताञ्जलिस्तमवदज्ज्वरो विष्णुज्वरार्दितः ।

निजं संहर विश्वेश ज्वरं मदनुकम्पया ॥ १९.१३७७ ॥

माधवेन तु तद्वाक्यात्संहृते च निजे ज्वरे ।

प्रणनाम हरिं हर्षाज्ज्वरः शर्वपुरःसरः ॥ १९.१३७८ ॥

किं ते प्रियं करोमीति वादिनं हृष्टमानसम् ।

तमब्रवीन्मधुरिपुः प्रसादमधुराक्षरम् ॥ १९.१३७९ ॥

भुजायुधमिदं युद्धमावयोः प्रणिपत्य माम् ।

ये मन्मयाः संस्मरन्ति सन्तु ते विज्वरा नराः ॥ १९.१३८० ॥

त्रिपाद्भूतिप्रहरणस्त्रिशिराः सास्रुलोचनः ।

ध्यातः प्रीतिसुखं दद्यात्त्वदाकारः शरीरिणाम् ॥ १९.१३८१ ॥

नाद्यन्ताः कवयः पूर्वे शास्तारोऽल्पमहात्तमाः ।

घ्नन्तु ज्वरांश्चानिरुद्धप्रद्युम्नबलकेशवाः ॥ १९.१३८२ ॥

इत्युक्तः शौरिणा प्रीत्या तथेत्याह हरि ज्वरः ।

अभ्यधान्मौलिरत्नाग्रे प्रणयावर्जिताञ्जलिः ॥ १९.१३८३ ॥

अहं हरेण त्रिपुरान्तकेन विनिर्मितः कालियसूदनेन ।

जितस्त्वाया दानवकाननाग्रे प्रसह्य युद्धे तव किं करोमि ॥ १९.१३८४ ॥

इत्युक्त्वापसृते शर्वज्वरे पूर्वं रणाङ्गनात् ।

तार्क्ष्यमारुह्य युयुधे सात्मजः साग्रजो हरिः ॥ १९.१३८५ ॥

विदारिताः कृष्णशरैः स्वामिसन्मानयन्त्रिताः ।

मानिनो दैत्यसुभटा न तस्थुर्न ययुः क्षणम् ॥ १९.१३८६ ॥

ततो विघटितव्यूहा भग्नस्यन्दनकुञ्जराः ।

ययुस्त्यकत्वा रणं दैत्या दामोदरविदारिताः ॥ १९.१३८७ ॥

विद्राविताास्ते हरिणा हरिणा हरिणा इव ।

नदीवेगा इव गताः प्रतीपं न समाययुः ॥ १९.१३८८ ॥

प्राणैस्तृणाग्रलघुभिः कल्पापायस्थिरं यशः ।

विक्रीय किं गता यूयं मृत्युः सर्वत्र देहिनाम् ॥ १९.१३८९ ॥

मानपर्वतवज्रेण कीर्तिवल्ली दवाग्निना ।

औचित्यचित्रधूमेन भयेनाभिहताः कथम् ॥ १९.१३९० ॥

इति बाणेन बहुशः कुम्भाण्डेन च मानिना ।

निवार्यमाणा अपि ते जग्मुरेव दिशो दश ॥ १९.१३९१ ॥

ततो रणाङ्गने रुद्रो भगवान्भगनेत्रहा ।

देवः पिनाकी सगुहः स्वयं योद्धुमथाययौ ॥ १९.१३९२ ॥

तुषारनिकरस्मेरस्फारैर्गात्रांशुसंचयैः ।

कुर्वन्निव जगन्नाथो भूरिभूतिविभूषितम् ॥ १९.१३९३ ॥

वलद्वलयकेयूरकुण्डलव्यालमण्डलैः ।

त्रिपुरानलधूमालीभङ्गैरिव तरङ्गितः ॥ १९.१३९४ ॥

सृजन्कण्ठप्रभाचक्रैर्दिग्वधूनीलकञ्चुकैः ।

प्रलयारम्भसचिवान्पुष्करावर्तकानिव ॥ १९.१३९५ ॥

गाढबन्धजटाजूटस्फुटच्चन्द्रकलाङ्कुरः ।

स्फूर्जत्फेनामरनदीरचितोष्णीषविभ्रमः ॥ १९.१३९६ ॥

रथेन नन्दियुक्तेन सिंहयुक्तेन भास्वता ।

कोपपावकपुञ्जेन मूर्तेनेवावृताम्बरः ॥ १९.१३९७ ॥

तारकावजयोदारकुमारानुगतं हरम् ।

हरिरालोक्य निष्कम्पः सज्जं चक्रे निजं धनुः ॥ १९.१३९८ ॥

क्रुद्धस्य खण्डपरशोः समराडम्बरे स्वयम् ।

अभूदकाण्डप्रलयारम्भशङ्का शरीरिणाम् ॥ १९.१३९९ ॥

ततः कनकनाचैर्भर्गः कृष्णमपूरयत् ।

तृतीयनयनोद्धूतभूरिवह्निशिखोपमैः ॥ १९.१४०० ॥

उग्रैरुग्रभुजोत्सृष्टैर्वेगस्पष्टीकृतैर्वृतः ।

स तैस्तद्वलयव्यालैर्ज्याकृष्टित्रुटितैरिव ॥ १९.१४०१ ॥

शरधारासहस्रोग्रं विस्फूर्जद्गर्जितोर्जितम् ।

मुमोच भद्रं रुद्राय पर्जन्यास्त्रं जनार्दनः ॥ १९.१४०२ ॥

अस्त्रेण त्रिपुरारातिर्व्याप्तस्तेन प्रमाथिना ।

आग्नेयमस्त्रं विदधे वित्रासितजगत्त्रयम् ॥ १९.१४०३ ॥

वह्निज्वालावलयितः साग्रजो गरुडध्वजः ।

हेमपञ्जरबद्धस्य भेजे केसरिणः श्रियम् ॥ १९.१४०४ ॥

वारुणेन शमं नीते तस्मिन्नस्त्रे मुरारिणा ।

पैशाचरौद्राङ्गिरसैर्युयुधेऽस्त्रैस्त्रिलोचनः ॥ १९.१४०५ ॥

निवार्यास्त्राणि तान्याशु सौरवायव्यवासवैः ।

संदधे क्रोधविधुरस्त्रिपुरान्तकरं शरम् ॥ १९.१४०६ ॥

चिराच्चापप्रणयितां तस्मिन्नीतेऽन्धकद्विषा ।

हरिर्विजृम्भमाणास्त्रं तं विजृम्भाकुलं व्यधात् ॥ १९.१४०७ ॥

घोरघोषेण शार्ङ्गस्य पाञ्चजन्यस्य चासकृत् ।

जृम्भिते भैरवे भीमं भयं भूतानि लेभिरे ॥ १९.१४०८ ॥

ततः कुम्भाण्डसूतेन रथेन पृथुरंहसा ।

प्रत्युद्ययौ रामकृष्णप्रद्युम्नान्कुपितो गुहः ॥ १९.१४०९ ॥

अनिलानलपर्जन्यैरस्त्रैरभिहतः स तैः ।

दीप्तास्त्रजालैर्विदधे जगत्संक्षोभविभ्रमम् ॥ १९.१४१० ॥

षण्मुखोऽपि बभौ हेमपुङ्खैस्तद्विविधैर्वृतः ।

जन्मक्षेत्रं शरवरं प्रीत्या पुनरिवाश्रितः ॥ १९.१४११ ॥

अस्त्रं ब्रह्मशिरो रौद्रमसृजत्तारकान्तकः ।

ज्वालाभिज्वलिता यस्य शैलाः प्रापुः सुमेरुताम् ॥ १९.१४१२ ॥

तस्मिन्विश्वक्षयाक्षेपदीक्षाविक्षोभिताखिले ।

अस्त्रानले प्रविसृते हरिश्चक्रं समादधे ॥ १९.१४१३ ॥

तत्सर्वास्त्रहरं घोरं मार्तण्डोच्चण्डमण्डलम् ।

हरिदोर्दण्डसंसक्तं जहारास्त्रानलप्रभाम् ॥ १९.१४१४ ॥

चक्रांशुक्रकचोत्कृत्ते तस्मिन्नस्त्रप्रभावने ।

प्रजग्राह गुहः शक्तिं क्रूरां क्रौञ्चाद्रिदारिणीम् ॥ १९.१४१५ ॥

मृत्युदन्तावलीताररत्नराजिविराजिताम् ।

तारकासृक्कणाकारशोणपट्टविभूषिताम् ॥ १९.१४१६ ॥

चिक्षेप कार्तिकेयस्तां घण्टापटलराविणीम् ।

क्रोशन्तीं त्रिजगद्ग्रासलालसां क्षुधितामिव ॥ १९.१४१७ ॥

सा दीप्ताग्रप्रभाताभ्रभ्रूकेशश्मश्रुभीषणे ।

चक्रे व्योम महाकालवक्त्रे जिह्वाविजृम्भितम् ॥ १९.१४१८ ॥

स्वस्ति स्वस्त्यच्युतायेति दिवि देवैरुदीरितम् ।

सा कृष्णाभिमुखी शक्तिर्वेगाद्विद्युदिवाबभौ ॥ १९.१४१९ ॥

सा कृष्णहुंकारहता तस्मान्निष्फलतां ययौ ।

आशेव बद्धा मुग्धेन लब्धे कुटिलचेतसि ॥ १९.१४२० ॥

ततश्चक्रायुधश्चक्रे कलयन्वलयं रुषः ।

गुहं वीक्ष्य कटाक्षेण तद्वधे विदधे मतिम् ॥ १९.१४२१ ॥

निरम्बरा मुक्तकेशी श्यामा लोहितलोचना ।

तस्थौ कुमाररक्षायै मूर्ता शक्तिरिवाग्रतः ॥ १९.१४२२ ॥

अपगच्छापगच्छेति सासूयं कालियाद्विषा ।

निवार्यमाणाप्यसकृत्ततो नापससार सा ॥ १९.१४२३ ॥

अत्रान्तरे घनध्वानधीरगम्भीरनिःस्वनैः ।

तारतीररवैः सैन्यैर्बाणः स्वयमदृश्यत ॥ १९.१४२४ ॥

स कौमारमयूरस्य शुशुभे पृष्ठमास्थितः ।

अञ्जनाद्रितटं नीलमेघसंघ इवोच्छ्रितः ॥ १९.१४२५ ॥

सोऽवदत्कृष्णमभ्येत्य बहुबाहुबलोर्जितः ।

प्रत्यासन्नविनाशोऽद्य दीपवद्वत वर्धसे ॥ १९.१४२६ ॥

हतो मया विदेशेऽस्मिन्नविज्ञातः सुहृज्जनैः ।

ध्रुवं त्यक्ष्यसि कृच्छ्रेण जीवितं मृतबान्धवः ॥ १९.१४२७ ॥

इति बाणेन गदिते गर्वाद्गरुडलाञ्छनः ।

कत्थनेनैव शूरोऽसि नूनमित्याह सस्मितः ॥ १९.१४२८ ॥

ततः शितशरासारैः पूरितः स मुरारिणा ।

असृजद्दोःसहस्रेण घोरायुधपरम्पराम् ॥ १९.१४२९ ॥

तत्कृशानुकणाकारपूरपूरितमम्बरम् ।

विकीर्णस्वर्णचूर्णाया लेभे मणिभुवः प्रभाम् ॥ १९.१४३० ॥

अस्त्रं हिरण्यकशिपोरथ बाणः समादधे ।

यद्वीत्येव दिशः क्वापि ययुः संतमसावृताः ॥ १९.१४३१ ॥

तदुद्भूतास्त्रनिचयैः पूरिते गगनाङ्गने ।

वायोरपि गतिर्नाभूत्का कथा व्योमचारिणाम् ॥ १९.१४३२ ॥

पर्जन्यास्त्रेण हरिणा तस्मिन्नस्त्रे निवारिते ।

बाणबाहुवनोत्सृष्टा शरवृष्टिः समुद्ययौ ॥ १९.१४३३ ॥

बभर्तुर्बर्हिगरुडौ युद्धे चञ्चुनखायुधौ ।

मिश्रीभूताविव मुहुर्नीलशैलसुराचलौ ॥ १९.१४३४ ॥

ततस्तार्क्ष्येण पक्षाग्रक्षेपविक्षेपकारिणा ।

आकृष्णाभिहतो मूर्ध्नि मयूरोऽद्रिरिवापतत् ॥ १९.१४३५ ॥

दैत्येन्द्रे निहते नन्दी प्रेरितस्त्रिपुरारिणा ।

रौद्रं रथं समादाय सज्जोऽभूत्समरे पुनः ॥ १९.१४३६ ॥

बाणस्तूर्णं समारुह्य मानी मन्युविषाकुलः ।

चकार ब्रह्मशिरसा महास्त्रेण जगत्क्षयम् ॥ १९.१४३७ ॥

ततश्चक्रं सहस्रारं संहारं त्रिदशद्विषाम् ।

उद्यम्य ग्रस्तदैत्यास्त्रं हरिर्दैत्येन्द्रमाद्रवत् ॥ १९.१४३८ ॥

पुनः संन्यस्तवसना काली कुवलयेक्षणा ।

पुरो बभूव रक्षार्थं बाणस्य प्राणसंशये ॥ १९.१४३९ ॥

दृष्ट्वा तामवदत्कृष्णस्त्राणं वः कथमङ्गना ।

बाण संशयकालेषु नेदं वीरव्रतोचितम् ॥ १९.१४४० ॥

इत्युक्त्वा मीलिताक्षस्तां परिवर्ज्याङ्गनां हरिः ।

उत्ससर्ज प्रभाचक्रदुष्प्रेक्षं चक्रमञ्जसा ॥ १९.१४४१ ॥

तदलक्ष्यभ्रमोद्भ्रान्तं बाणबाहुवने मुहुः ।

चक्रं पूर्णानलापूरक्रूरं क्रकचतां ययौ ॥ १९.१४४२ ॥

क्षणेन मूलनिर्लूनप्रभूतभुजापादपः ।

बभूव बाणः सावेगस्रवद्रुधिरनिर्झरः ॥ १९.१४४३ ॥

कण्ठच्छेदोद्यतं दृष्ट्वा बाणस्य मधुसूदनम् ।

अभ्येत्य भगवान्भर्गः सगुहः प्रणतोऽभ्यधात् ॥ १९.१४४४ ॥

कृष्ण जाने जगज्जनमस्थितिसंहारकारणम् ।

त्वां तथाप्येष नः कोऽपि दैत्यपक्षपरिग्रहः ॥ १९.१४४५ ॥

मद्भक्त एव भक्तस्ते संरक्ष्यस्ते महाश्रयः ।

अहमेव भवान्ब्रह्ममूर्तिस्त्रैगुण्यसङ्गतः ॥ १९.१४४६ ॥

मदेकशरणस्तस्माद्रक्ष्यो बाणस्त्वयाधुना ।

उक्तो हरेणेति हरिस्तथेत्युक्त्वानुरक्षितम् ॥ १९.१४४७ ॥

ततस्त्रिनेत्रमामन्त्र्य प्रयाते गरुडध्वजे ।

पश्चात्कृत्तभुजं बाणं नन्दी चिन्ताकुलोऽभ्यधात् ॥ १९.१४४८ ॥

अहो बत न जानीमः कियती भवितव्यता ।

बाणस्त्र्यक्षे सपक्षेऽपि प्राप्तो जीवितसंशयम् ॥ १९.१४४९ ॥

बाण च्छिन्नभुजोऽप्यत्र नृत्येनाराधय प्रभुम् ।

भवं भवभयोच्छेदकोविदं वरदं सखे ॥ १९.१४५० ॥

इत्युक्तो नन्दिना बाणश्चिरचारी पदक्रमैः ।

ननर्त भगवान्येन वरदोऽस्याभवद्भवः ॥ १९.१४५१ ॥

अमरो निर्व्यथः श्रीमाञ्जातः पूज्यभुजद्वयः ।

बाणोऽभूदीश्वरवरान्महाकालो गणाग्रणीः ॥ १९.१४५२ ॥

अन्तर्हितेऽथ सगणे सहसा पार्वतीपतौ ।

बभूव शोणितपुरं शून्यं दैत्यजनोज्झितम् ॥ १९.१४५३ ॥

उषासहायमादाय बाणान्तःपुरमन्दिरात् ।

अनिरुद्धं प्रमुदितः प्रययौ गरुडध्वजः ॥ १९.१४५४ ॥

व्रजन्स तार्क्ष्यपक्षांशुपिशङ्गीकृतदिङ्मुखः ।

सस्मार सत्यभामाया वचनं चारुलोचनः ॥ १९.१४५५ ॥

सन्ति दिव्यामृतक्षीरा दिव्या बाणस्य धेनवः ।

ता मदर्थं त्वया देव हर्तव्या इति सस्मितः ॥ १९.१४५६ ॥

ता हर्तुमुद्ययौ यावच्चरन्तीर्जलधेस्तटे ।

तावत्ता विविशुः सर्वा जवेन वरुणालयम् ॥ १९.१४५७ ॥

ततः सुपर्णपक्षोग्रवातसंक्षोभितेऽम्बुधौ ।

घोरं रथसहस्रौघैरुद्ययौ वारुणं बलम् ॥ १९.१४५८ ॥

मुरारिशरसंभारदारिते च बलार्णवे ।

उदतिष्ठन्मणिच्छत्रः कुपितो वरुणः स्वयम् ॥ १९.१४५९ ॥

दिव्यास्त्रवर्षी समरे वैष्णवास्त्रेण शौरिणा ।

निर्दह्यमानो वरुणः प्राञ्जलिस्तमभाषत ॥ १९.१४६० ॥

मूर्तिराद्या तवैवाहं जगत्सर्गे जगत्पते ।

क्षन्तुमर्हसि मे देव जहि कोपं तमोमयम् ॥ १९.१४६१ ॥

न्यासीकृतं गोधनं च बाणेन परिरक्ष मे ।

इत्युक्तस्तेन भगवान्प्रीतः प्रायाद्विहायसा ॥ १९.१४६२ ॥

स्तूयमानः सुरगणैर्द्वारकोपान्तमेत्य सः ।

निक्षिप्य निजवक्त्रे च पाञ्चजन्यमपूरयत् ॥ १९.१४६३ ॥

तस्य गम्भीरगोषेण सुस्निग्धघननादिना ।

हर्षोत्सवोऽभवत्कोऽपि वृष्णिवीरशिखण्डिनाम् ॥ १९.१४६४ ॥

प्रविश्य द्वारकां देवः पूजितः सर्वयादवैः ।

पश्चादवाप्तसत्कृत्यं विसृज्येन्द्रं सहानुगम् ॥ १९.१४६५ ॥

गरुडं च प्रियतमाप्रणयप्रेमलालसः ।

विजहार सुरारातिर्निःशेषक्षयनिर्वृतिः ॥ १९.१४६६ ॥

▪ ▪ ▪ ▪ ▪ बाणयुद्धम् ॥ ४३ ॥ *****

वैशम्पायन इत्यूचे राजानं जनमेजयम् ।

इति तस्य वचः श्रुत्वा पुनः पप्रच्छ शौनकः ॥ १९.१४६७ ॥

पूर्वे वंशाः श्रुताः सर्वे जनमेजयभूपतेः ।

संतानवंशमिच्छामि श्रोतुं सूत त्वयोदितम् ॥ १९.१४६८ ॥

इति पृष्टोऽब्रवीत्सूतो जनमेजयसंभवौ ।

चन्द्रापीडो महीपालः सूर्यापीडश्च मक्तिभाक् ॥ १९.१४६९ ॥

चन्द्रपीडसुतः सत्यकर्णो भ्रातृशताग्रजः ।

तत्पुत्रः श्वेतकर्णाख्यो महाप्रस्थानमाविशत् ॥ १९.१४७० ॥

तं जाया मालिनी नाम सगर्भानुययौ सती ।

प्रतिजातस्तया त्यक्तः कुमारो गिरिकन्दरे ॥ १९.१४७१ ॥

रुरोद तस्य कारुण्यात्प्रादुरासन्पयोमुचः ।

गृहीतो मुनिपुत्राभ्यां धृष्टपार्श्वद्वयो गिरौ ॥ १९.१४७२ ॥

अजपार्श्व इति ख्यातः सोऽभवद्यन्वनां वरः ।

तत्पुत्रपौत्रैर्विपुलैः पूरुवंशो विवर्धितः ॥ १९.१४७३ ॥

ययातिप्रोक्तमप्यर्कग्रहहीना मही भवेत् ।

पूरुवंशविहीना तु न कदाचिद्भविष्यति ॥ १९.१४७४ ॥

▪ ▪ ▪ ▪ ▪ जनमेजयवंशः ॥ ४४ ॥ *****

भारते पूर्वपूजासु जनमेजयभूभुजा ।

श्रुत्वा दानविधिं पृष्टो व्यासशिष्योऽब्रवीत्पुनः ॥ १९.१४७५ ॥

आदिपर्वणि विप्रेभ्यः प्रदद्यान्मधुपायसम् ।

अपूपमोदकैः कुर्यात्सभापर्वणि तर्पणम् ॥ १९.१४७६ ॥

आरण्यके मूलफलैर्वैराटे वस्त्रमर्पयेत् ।

विचित्रभोज्यपानान्नं दद्यादुद्योगभीष्मयोः ॥ १९.१४७७ ॥

द्रोणपर्वण्यायुधानि शुद्धान्नं कर्णपर्वणि ।

शल्यपर्वण्यपूपादिसमोदकगुडोदनम् ॥ १९.१४७८ ॥

मुद्गमिश्रं गदायुद्धे स्त्रीपर्वणि विभूषणम् ।

घृतौदनमथैषू(षी)के हविष्यं शान्तिपर्वणि ॥ १९.१४७९ ॥

अश्वमेधे यताकामं हविष्यं तद्वदाश्रमे ।

मौसले गन्धमाल्यादि प्रस्थानाख्ये उपानहौ ॥ १९.१४८० ॥

स्वर्गपर्वणि भक्ष्यादि हरिवंशे तु पायसम् ।

भारतान्ते सरस्वत्याः पूजामादाय पुस्तके ॥ १९.१४८१ ॥

हिरण्यदोऽचिंतहरिः सर्वयज्ञफलोचितः ।

पर्वपूजां निशम्येति पुनः पप्रच्छ शौनकः ॥ १९.१४८२ ॥

- - - - - पर्वपूजा ॥ ४५ ॥ *****

सर्वसत्रे निवृत्ते तु रक्षिते तक्षके तथा ।

ततः किमकरोत्सूत स राजा जनमेजयः ॥ १९.१४८३ ॥

सूतोऽवदत्ततो राजा विद्वन्मन्त्रिपुरोहितैः ।

चिन्तयित्वाश्वमेधाय पूर्णं संभारमादधे ॥ १९.१४८४ ॥

अथाजगाम भगवान्दिव्यज्ञानमयो मुनिः ।

वेदविद्यानिधिः श्रीमान्व्यासः सत्यतपोनिधिः ॥ १९.१४८५ ॥

तं महार्हासनासीनं पूजयित्वा नतो नृपः ।

पप्रच्छ भारतसुधाचर्वणानन्दनिर्भरः ॥ १९.१४८६ ॥

भगवन्राजसूयेन कृतः क्षत्त्रक्षयो महान् ।

स कथं पाण्डुपुत्राणां भवता न निवारितः ॥ १९.१४८७ ॥

पृष्टो नृपेणेत्यवदन्मुनिर्दन्तांशुभिर्दिशन् ।

मुखे सरस्वतीवासकमले केसरावलीम् ॥ १९.१४८८ ॥

अवश्यभाविनि कथं तस्मिन्क्षत्त्रक्षये वयम् ।

प्रभवामो हितं कश्च मन्यते विधिचोदितः ॥ १९.१४८९ ॥

इयं भवासक्तजन्तुयातायातानिलाहतिः ।

सर्वात्मना बलवती जृम्भते भवित्वयता ॥ १९.१४९० ॥

शुभाशुभफलैः प्राप्तिः सहजाप्यग्रवर्तिनी ।

भ्रूलतेव ललाटस्था स्वदृशा केन दृश्यते ॥ १९.१४९१ ॥

तेषां कालपरीतानां धीरभूद्दृढनिश्चया ।

सर्वंकषो हि भगवान्कालः कवलिताखिलः ॥ १९.१४९२ ॥

देहिभर्दैवनिर्दिष्टं वचसा यदि लङ्घ्यते ।

तत्सत्त्रमप्यश्वमेधं मा कृथा विघ्नदो हि सः ॥ १९.१४९३ ॥

श्रुत्वा शतक्रतुर्द्वेषात्तव क्रतुशतत्रयम् ।

पत्नी प्रविश्य यज्ञाश्वं रागान्धो धर्षयिष्यति ॥ १९.१४९४ ॥

ततः प्रभृति लोकेऽस्मिन्प्रवृद्धे कलिकल्मषे ।

महायज्ञकथामात्रमपि दूरे भविष्यति ॥ १९.१४९५ ॥

सेनानीः काश्यपिः कश्चिदौद्भिदः कलिगोचरे ।

अश्वमेधं कृती विप्रः पुनः प्रत्याहरिष्यति ॥ १९.१४९६ ॥

इति श्रुत्वा विष्णेन मुनिः पृष्टो महीभुजा ।

उवाच ज्ञाननयनः पर्यन्तयुगलक्षणम् ॥ १९.१४९७ ॥

वर्णाश्रमाचारचर्चा विपरीता यतेप्सिता ।

भविष्यति यदा लोके तद्युगान्तस्य यौवनम् ॥ १९.१४९८ ॥

शिथिलक्षणसौहार्दाः सत्यशीलविवर्जिताः ।

केशवेशा भविष्यन्ति निरुष्णीषाम्बरा नराः ॥ १९.१४९९ ॥

दस्यवो राजचरिता राजाने दस्तुचेष्टिताः ।

करिष्यन्ति कलेः सर्वे साहाय्यं धर्मसंक्षये ॥ १९.१५०० ॥

पक्वान्नविक्रयो लोके वेदविक्रयिणो द्विजाः ।

भविष्यन्ति युगे क्षीणे गृहीण्यो भगविक्रयाः ॥ १९.१५०१ ॥

उपदेशकृतः शूद्रा ब्रह्मदीक्षाविधायिनः ।

भोःशब्देन भविष्यन्ति विप्रा अवमताः पुनः ॥ १९.१५०२ ॥

मुण्डाः कषायवसना नानाव्रतविकारिणः ।

प्रतिग्रहान्ग्रहीष्यन्ति शूद्रा विद्रावितद्विजाः ॥ १९.१५०३ ॥

रूपलावण्यमाधुर्ये परिक्षीणे सुभूषणे ।

केशालांकरणा नार्यो भविष्यन्ति गतत्रपाः ॥ १९.१५०४ ॥

स्वशास्त्रपण्डिताः सर्वे निर्विवेका मुमुक्षवः ।

भविष्यन्ति कुले जाता निष्प्रयत्नफलेप्सवः ॥ १९.१५०५ ॥

वञ्चना वञ्चनाज्ञानां तस्कराणां च तस्कराः ।

किमन्यत्प्रभविष्यन्ति राजानो दारहारिणः ॥ १९.१५०६ ॥

बबुस्त्रीकोऽल्पपुरुषो हिमवत्पार्श्वसंश्रयः ।

लोकस्कन्धार्पितापत्यो हाहाभूतश्चरिष्यति ॥ १९.१५०७ ॥

दम्भः शौचं वक्रमायाकृतित्वं हिंसाशौर्यं वृत्तिरन्योपघातः ।

तर्कः शास्त्रं नास्तिकत्वं च बोधः शौचाचारत्याग एवाशु मुक्तिः ॥ १९.१५०८ ॥

इत्येवं कलिना लोके किल्बिषैराकुलीकृते ।

पुनः कालविपाकेन कृतधर्मः प्रवर्तते ॥ १९.१५०९ ॥

- ▪ ▪ ▪ ▪ ▪ भविष्यत् ॥ ४६ ॥ *****

ततस्तिरोहिते क्षिप्रं मुनौ ज्ञानदिवाकरे ।

अश्वमेधो नरपतेः क्रतुः श्रीमानवर्तत ॥ १९.१५१० ॥

तस्मिन्यज्ञे प्रविश्याश्वं राजपत्नीं वपुष्टमाम् ।

अकामां कामवशतः शतक्रतुरधर्षयत् ॥ १९.१५११ ॥

तदध्वर्युगिरा प्राप्तो राजा कोपविषोल्बणः ।

शशाप शक्रं यज्ञांशनिषेधेनाजितेन्द्रियम् ॥ १९.१५१२ ॥

निरस्य सर्वान्सासूयं ब्राह्मणाद्विषयान्निजात् ।

प्रविश्याकम्पिततनुः पत्नीशालामभाषत ॥ १९.१५१३ ॥

इयं निष्कास्यतां पङ्ककुल्या कुटिलचारिणी ।

किल्बिषालोलकल्लोलाकुलकूलावपातिनी ॥ १९.१५१४ ॥

गृहे दूषिताचारित्रा नेयं मे स्थातुमर्हति ।

यशःपूर्णशशाङ्कस्य मेघमालायितं यया ॥ १९.१५१५ ॥

स्वादु नाश्नन्ति संतप्ता न च रात्रिषु शेरते ।

शल्यं मर्मान्तरे येषां गृहे भार्या हि दूषिता ॥ १९.१५१६ ॥

इति वादिनि भूपाले गन्धर्वाधिपतिः स्वयम् ।

विश्वावसुस्तमभ्येत्य सौहार्ददिदमब्रवीत् ॥ १९.१५१७ ॥

राजन्रम्भा तव वधूरियं देवविलासिनी ।

वपुष्टमा सुरेन्द्रेण यज्ञेऽस्मिन्धर्षिता सती ॥ १९.१५१८ ॥

त्वत्प्रभावभयाद्विप्रभयाद्द्वेषान्मनोभवात् ।

दैवदिष्टश्च शक्रेण विघ्नस्ते विहितः क्रतौ ॥ १९.१५१९ ॥

विप्रेभ्यो मा क्रुधः पत्नीं मा त्याक्षीः शुद्धमानसाम् ।

गुह्यस्पर्शो ह्यकामाया दृश्ययाङ्गस्पर्शसंनिभः ॥ १९.१५२० ॥

जनजन्म महीरन्ध्रे पुरंध्रीणां स्वभावतः ।

अशुद्धं शुद्धिमाधत्ते ब्राह्मणान्मा मुधा वधीः ॥ १९.१५२१ ॥

इति गन्धर्वराजेन बोधितो जनमेजयः ।

प्रशान्तकोपः संचिन्त्य तथेति प्रत्यपद्यत ॥ १९.१५२२ ॥

- ▪ ▪ ▪ ▪ ▪ जनमेजययज्ञसमाप्तिः ॥ ४७ ॥ *****

निशम्य विष्णुचरितं वैशम्पायनकीर्तितम् ।

पुनः प्रपच्छ वाराहं प्रादुर्भावं महीपतिः ॥ १९.१५२३ ॥

स पृष्टस्तेन विनयात्प्रणिपत्य हरिं मुनिः ।

विष्णोरानाययद्दिव्यं प्रभावं कल्मषापहम् ॥ १९.१५२४ ॥

पूर्णे युगसहस्रान्ते निवृत्ते ब्रह्मवासरे ।

हिरण्यरेतास्त्रिशिराः स्वयं देवो वृषाकपिः ॥ १९.१५२५ ॥

शिखाभिर्लोकमखिलं दग्ध्वा सगिरिसागरम् ।

एको नारायणः शेते गर्भीकृतजगत्त्रयः ॥ १९.१५२६ ॥

स गर्भीकृतविश्वः प्राङ्मुमोचाण्डं हिरण्मयम् ।

ऊर्ध्वाधस्तेन तद्भिन्नं विवृतं दिक्षु चाष्टधा ॥ १९.१५२७ ॥

बभूव त्रिजगत्क्षेत्रं भूतलान्तं खशेखरम् ।

गर्भं हिरण्यगर्भस्य यमाहुर्ब्रह्मवादिनः ॥ १९.१५२८ ॥

स्वच्छं यत्सलिलं तत्र सुमेरुः काञ्चनाचलः ।

ममज्ज मेदिनी तस्मिन्गिरीन्द्रशतपीडिता ॥ १९.१५२९ ॥

अशक्ता धर्तुमखिलं प्राणितं विष्णुतेजसा ।

वैकुण्ठं शरणं प्रायानमग्ना गौरिव मेदिनी ॥ १९.१५३० ॥

ततो विश्वंभरोद्धारधीरं वपुरकल्पयत् ।

वाराहं दुष्टसंहारि हरिर्गिरिमिवोच्छ्रितम् ॥ १९.१५३१ ॥

भिन्नाञ्जनचयच्छायं शुभदंष्ट्रांशुसंचयम् ।

नीलजीमूतसंघातादिव निर्यन्निशाकरम् ॥ १९.१५३२ ॥

बभ्रुभ्रूश्मश्रुकेशेन वक्त्रणारञ्जिताम्बरम् ।

नीलाद्रिशिखरेणेव हेमराजिरजोजुषा ॥ १९.१५३३ ॥

स पातालतलं तालतमालमलिनोदरम् ।

विवेश दंष्ट्राखण्डेन्दुखण्डितध्वान्तमण्डलः ॥ १९.१५३४ ॥

मन्त्रात्मा वेद यज्ञाङ्गः स वराहो महाकृतिः ।

दंष्ट्राग्रेणोज्जहार क्ष्मां शेवाललतिकामिव ॥ १९.१५३५ ॥

सा तस्य दंष्ट्रापर्यन्ते सक्ता कुवलयेक्षणा ।

बभौ लाञ्छनलेखेन श्यामशीतांशुमण्डले ॥ १९.१५३६ ॥

जगन्निवासो वसुधामुद्धृत्य जगतः स्थितिम् ।

विदधे दिग्विभागेन भूधरांश्च न्यवेशयेत् ॥ १९.१५३७ ॥

शङ्खचक्रगदाकारान्पर्वतान्विनिवेश्य सः ।

असृजत्पुरुषं वक्त्राद्देवमाद्यं प्रजापतिम् ॥ १९.१५३८ ॥

किं करोमीति पुरतस्तस्मिन्वदति सादरम् ।

विभजात्मानमित्युक्त्वा विश्वयोनिस्तिरोदधे ॥ १९.१५३९ ॥

ततश्चिन्तयतस्तस्य चिदाकाशसमुद्भवः ।

ओमित्युदचरन्नादः संपूरितजगत्त्रयः ॥ १९.१५४० ॥

ततोऽभवद्वषट्कारो महाव्याहृतयस्तथा ।

वेदमाता च सावित्री वेदैः सह सनातनैः ॥ १९.१५४१ ॥

विशुद्धमानसावासराजहंसाः प्रजापतेः ।

अजायन्त जगद्वन्द्याः सप्त पूर्वे महर्षयः ॥ १९.१५४२ ॥

दक्षस्तु दक्षिमाङ्गुष्ठादुदभूद्यः प्रजापतिः ।

तत्सुताः कन्यकाः प्रापुर्धर्मेन्दुमनुकश्यपाः ॥ १९.१५४३ ॥

तासामयं विश्वसर्गः संतानः स सुरासुरः ।

असूत देवानदितिर्दितिर्दैत्यांश्च कश्यपात् ॥ १९.१५४४ ॥

हिरण्याक्षं समाश्रित्य कदाचिद्दितिजेश्वरम् ।

सपक्षाः पर्वताश्चक्रुर्गत्या भुवनविप्लवम् ॥ १९.१५४५ ॥

पक्षच्छेदोद्यते तेषां शक्रे तत्पक्षपातिना ।

हिरण्याक्षेण देवानां दारुणः संगरोऽभवत् ॥ १९.१५४६ ॥

तस्मिन्महास्त्रविक्षेपभूतक्षोभविभीषणे ।

हिरण्याक्षोऽजयद्देवान्भुवनाकम्पने रणे ॥ १९.१५४७ ॥

सुरेषु ध्वस्तधैर्येषु वराहो गिरिविग्रहः ।

भगवान्स्वयमभ्येत्य तस्थौ दैत्यवधोत्सुकः ।

दध्मौ दंष्ट्राकरालेन शङ्खं वक्त्रेण चक्रभृत् ॥ १९.१५४८ ॥

नादेन तस्य ब्रह्मण्डमण्डलावर्तकारिणा ।

ओङ्कारायितमुद्दर्पदैत्यक्षयमहाध्वरे ॥ १९.१५४९ ॥

ततोऽभ्येत्य हिरण्याक्षः क्षयदूतिकया द्विषाम् ।

शक्त्या वक्षसि देवेशं जघान घननिःस्वनः ॥ १९.१५५० ॥

लीलया वीक्ष्य भगवान्दैत्यमद्भूतविक्रमम् ।

असृजद्वैरिसंहारं सहस्रारं सुदर्शनम् ॥ १९.१५५१ ॥

कृतोत्तमाङ्गशृङ्गेऽथ तेन दैत्यमहीभृति ।

पतिते भुवि विध्वस्ताः प्रययुर्दानवा दिशः ॥ १९.१५५२ ॥

हिरण्याक्षे हते वीरे शेखरे त्रिदशद्विषाम् ।

धृता महावराहेण स्वपदं भेजिरे सुराः ॥ १९.१५५३ ॥

दंष्ट्रानिर्भिन्नभिन्नञ्जनगिरिगहनस्फारदैत्यान्धकारश्चन्द्रार्कोदारतारापथरुचिरतरप्रस्पुरच्छङ्खचक्रः ।

पायान्नः शेषशीर्षाक्रमणसमुदितैर्व्याप्तकायः फणाग्रैः क्षुभ्यत्क्षीराब्धिफेनैरिव मणिशबलैर्मन्दराभो वराहः ॥ १९.१५५४ ॥

- - - - - वराहप्रादुर्भावः ॥ ४८ ॥ *****

पुरा कृतयुगे श्रीमान्काश्यपो दितिनन्दनः ।

चक्रे हिरण्यकशिपुः साग्रं वर्षायुतं तपः ॥ १९.१५५५ ॥

अवध्यः सुरगन्धर्वकिन्नरोरगरक्षसाम् ।

आयुधानां च सर्वेषां सोऽभवद्ब्रह्मणो वरात् ॥ १९.१५५६ ॥

समं प्राप्तपदो दर्पादाक्रान्तभुवनत्रयः ।

वीरः सुराङ्गनाः सर्वाश्चक्रे प्रोषितभर्तृकाः ॥ १९.१५५७ ॥

ततः संत्रस्तविध्वस्तास्तत्प्रतापाग्निनिष्प्रभाः ।

ब्रह्मवाक्यायुर्देवाः शरणं देवमच्युतम् ॥ १९.१५५८ ॥

स दत्त्वा वरदस्तेषामभयं भूतभावनः ।

ओङ्कारानुगतं चक्रे नारसिंहं महद्वपुः ॥ १९.१५५९ ॥

सोऽभूज्ज्वलितहेमाद्रिप्रभासंभारघस्मरः ।

सावेगचरणाक्रान्तिखर्वीकृतमहीधरः ॥ १९.१५६० ॥

विद्रुमाग्राङ्कुराकारैश्चञ्चद्रोमाञ्चकञ्चुकैः ।

क्रूरक्रोधानलोद्भूतैर्विस्फुलिङ्गैरिवावृतः ॥ १९.१५६१ ॥

प्रतापमन्दिरागारकनकस्तम्भसंनिभैः ।

शङ्खचक्रगदापद्मलाञ्छनैर्भूषितो भुजैः ॥ १९.१५६२ ॥

कृतान्तद्विरदोदीर्णकर्णचामरविभ्रमैः ।

नखरांशुचयैः कुर्वन्साट्टहासमिवाम्बरम् ॥ १९.१५६३ ॥

मेरुकूटोन्नतस्कन्धशिखरासक्तकेसरैः ।

घोरः करालकालाग्निजीवनव्यजनैरिव ॥ १९.१५६४ ॥

जृम्भाविस्पष्टदंष्ट्रांशुपटलैरादिशन्मुहुः ।

चण्डांशुपुण्डरीकस्य विसिनीकाण्डमण्डलम् ॥ १९.१५६५ ॥

दृप्तदैत्यशतोत्पातशंसिनीं रुधिरारुणाम् ।

अकालसंध्यां कुर्वाणः पिङ्गोग्रनयनातपैः ॥ १९.१५६६ ॥

बभ्रुभ्रूभङ्गविकटं ललाटतटमुन्नतम् ।

अदभ्रमिव संध्याभ्रं स्फुरत्तारतडिद्गणम् ॥ १९.१५६७ ॥

स गत्वा दैतेयनिलयं प्रलयानलसंनिभः ।

ददर्शार्कसहस्राभां हिरण्यकशिपोः सभाम् ॥ १९.१५६८ ॥

स्थितां जगत्त्रयीमूर्ध्नि हेममालामिवोज्ज्वलाम् ।

दिव्यरत्नफलोदारसर्वर्तुकुसुमद्रुमाम् ॥ १९.१५६९ ॥

मणिकुट्टिमसंक्रान्तकान्तकान्तामुखाम्बुजाम् ।

तस्यां दैत्यपतिः श्रीमान्विरराजोर्जितद्युतिः ॥ १९.१५७० ॥

पृथुरत्नासनोत्सङ्गे सहस्रांशुरिवोदये ।

शुशुभे हेमपद्मस्रग्विपुले तस्य वक्षसि ॥ १९.१५७१ ॥

कल्पान्तसूर्यमालेव तटे कनकभूभृतः ।

निषिद्धा लोकपालानां स्थितिरत्रेति शासनम् ॥ १९.१५७२ ॥

क्षणं दिक्षु लिलेखेव रत्नकुण्डलरश्मिभिः ।

विटङ्करत्नमुकुटोद्द्योतैरिन्द्रायुधप्रभैः ॥ १९.१५७३ ॥

मुहुर्व्योममयूरस्य रत्नाभारमिवाकरोत् ।

सेवितः सिद्धगन्धर्वकिन्नराप्सरसां गणैः ॥ १९.१५७४ ॥

विश्वैश्वर्याब्धिफेनौघं बभारोष्णीषमुज्ज्वलम् ।

तस्मिन्स्वर्गाङ्गनापाणिमन्दान्दोलितचामरैः ।

राजलक्ष्मीर्जहासेव तरङ्गितसितांशुके ॥ १९.१५७५ ॥

अथादृश्यत दिग्दाहोद्गारदारुणमम्बरम् ।

केनापि........क्षरत्क्षतजनिर्भरम् ॥ १९.१५७६ ॥

प्रादुरासीत्ततः सिंहः श्रीमान्पुरुषविग्रहः ।

देवो देवारिदलनः कृशानुशतपिङ्गलः ॥ १९.१५७७ ॥

तं वीक्ष्य हृदयोत्कम्पनवदीक्षाविधायिनम् ।

मिथोमुखानि दितिजा विस्मयार्ता व्यलोकयन् ॥ १९.१५७८ ॥

कोऽयमित्याकुले क्षिप्रं दैत्यास्थानसभाङ्गणे ।

धीमानुवाच प्रह्लादो हिरण्यकशिपोः सुतः ॥ १९.१५७९ ॥

सर्वदेवमयः कोऽपि देवोऽयं महसां निधिः ।

येन नः स्थगितानीव चेतांसि च वचांसि च ॥ १९.१५८० ॥

स एवायं हिरण्याक्षो येन नीतः प्रमाथिना ।

कालकापालिकोत्तलस्कन्धवल्कलकेतुताम् ॥ १९.१५८१ ॥

इति ब्रुवाणे प्रह्लादे भ्रुकुटीकुटिलाननः ।

हिरण्यकशिपुर्दैत्यान्गृह्यतामित्यभाषत ॥ १९.१५८२ ॥

विप्रचितिप्रभृतयस्ततस्ते दानवर्षभाः ।

प्रदीप्तकङ्कटा घोरास्तं सर्वे पर्यवारयन् ॥ १९.१५८३ ॥

शस्त्रवृष्टिं तदुत्सृष्टां ज्वालाजालजटाकुलाम् ।

जग्राह निश्चलो देवः शोणपुष्पामिव स्रजम् ॥ १९.१५८४ ॥

स स्वद्योतैरिव व्याप्तः शरैः शिखदिदारुणैः ।

दृङ्मात्रेणैव तांश्चक्रे वातक्षिप्ततृणोपमान् ॥ १९.१५८५ ॥

नदत्प्रलयजीमूतनिःस्वनस्तान्विधूय सः ।

सभां बभञ्ज संजातजनक्षोभविराविणीम् ॥ १९.१५८६ ॥

दैत्यचक्रेऽथ विध्वस्ते सहसा तस्य तेजसा ।

दष्टौष्ठः स्वयमुत्तस्थौ हिरण्यकशिपुः क्रुधा ॥ १९.१५८७ ॥

स क्षिपन्नस्त्रसंघातं दण्डं चिक्षेप भीषणम् ।

कालचक्रं त्रिशूलं च कङ्कालं मुसलं तथा ॥ १९.१५८८ ॥

ब्रह्मास्त्रमशनिं त्वाष्ट्रं शक्तिं पाशुपतं हलम् ।

कालमुद्गरमत्युग्रं कृतान्तास्त्रं सविग्रहम् ॥ १९.१५८९ ॥

इत्येतैश्छाद्यमानोऽपि न चकम्पे नृकेसरी ।

नानाप्राणिमुखैर्दैत्यैर्घोरामायामयैर्वृतः ॥ १९.१५९० ॥

ततो हिरण्यकशिपुः क्रोधान्धः पृथुविग्रहः ।

चकार जगतां क्षोभं येन लोकाश्चकम्पिरे ॥ १९.१५९१ ॥

सपत्तनपुरीद्वीपपुरीनगरशासना ।

मही चचाल तटिनी मालिनी शैलशालिनी ॥ १९.१५९२ ॥

अथाकृष्य बालद्दैत्यं कृत्वोत्सङ्गे रणोत्कटम् ।

वक्षस्यदारयद्देवो वज्रोग्रनखरैः खरैः ॥ १९.१५९३ ॥

दैत्यहृत्कमलोदीर्णा निर्ययुः शोणितच्छटाः ।

नखक्रकचनिष्पेषजातवह्निशिखा इव ॥ १९.१५९४ ॥

हते दैत्येश्वरे वीरे प्रवरे दर्पशालिनाम् ।

देवा नृहरिनिर्दिष्टां निजां लक्ष्मीं प्रपेदिरे ॥ १९.१५९५ ॥

स्तुतश्चतुर्मुखमुखैर्ध्येयो मोक्षपथार्थिनाम् ।

ततः क्षीरोदधेः कूलमुत्तरं प्रययौ हरिः ॥ १९.१५९६ ॥

रक्तच्छटाछुरितदारुणदैत्यवश्रःसंध्याभ्ररन्ध्रविसृता नखशुक्तयस्ताः ।

देवस्य सिंहवपुषः सुरवैरिनारीवक्त्राब्जपुञ्जशिशिरांशुकला जयन्ति ॥ १९.१५९७ ॥

- - - - - नरसिंहप्रादुर्भावः ॥ ४९ ॥ *****

हिरण्यकशिपोः सूनुः प्रह्लादो दैत्यशेखरः ।

प्रल्हादस्य सुतो वीरः सुरवैरी विरोचनः ॥ १९.१५९८ ॥

विरोचनस्य तन्यस्त्रैलोक्यविजयी बडिः(लिः) ।

धृतः शक्रपदे चक्रवर्ती दैत्यगणैः स्वयम् ॥ १९.१५९९ ॥

प्रययौ त्रिदशाञ्जेतुं त्रिजगद्व्यापिभिर्बलैः ।

मत्तद्विपघटाघण्टाटाङ्कार्घट्टिताम्बरः ॥ १९.१६०० ॥

रथैर्नगरनिस्फारैर्गिरिराजनिभैर्गजैः ।

वातवेगैश्च तुरगैस्तेन खं समपूर्यत ॥ १९.१६०१ ॥

स्वर्भानुविन्दनमुचिप्रह्लादबलशम्बरैः ।

जम्भकुम्भोदरोग्राक्षतारकाक्षविरोचनैः ॥ १९.१६०२ ॥

विप्रचित्तिहयग्रीवमयमुख्यैः सुरारिभिः ।

प्रदीप्तध्वजसंनाहैः कोटीनां कोटिभिर्वृतः ॥ १९.१६०३ ॥

चकार धवलोष्णीषच्छत्रचामरमण्डलैः ।

स्फारफेनावलीस्फीतदुग्धोदधिनिभं नभः ॥ १९.१६०४ ॥

शक्रोऽपि सह लोकेशैर्धृतस्त्रिदशकोटिभिः ।

चक्रे कुटिलदीप्तांशुमण्डलीकपिशा दिशः ॥ १९.१६०५ ॥

अताड्यत ततश्चण्डस्त्रिदशासुरसैन्ययोः ।

प्रलयाम्बुधरध्वानधीरः समरदुन्दुभिः ॥ १९.१६०६ ॥

अथ शस्त्रास्त्रसंघट्टज्वालाजटिलविग्रहाः ।

कोपानले खड्गयूपे रुधिराज्ये धनुःस्रुवे ।

तस्मिन्रणमहायज्ञे विबभौ दीक्षितो बलिः ॥ १९.१६०७ ॥

इतः शक्रार्कदहनैर्बाणासुरमुखौरितः ।

शरान्धकारे विहिते घोरोऽभूत्सैन्ययोः क्षयः ॥ १९.१६०८ ॥

ततो दैत्यास्त्रनिस्त्रिंशदारितास्त्रिदशा दिशः ।

त्रस्ता ययुर्देहमात्रपरित्राणत्रपाकुलाः ॥ १९.१६०९ ॥

भग्नचक्रे गते शक्रे दहने गहनैषणि ।

विरते मारुते युद्धाद्गृहीतप्रशमे यमे ॥ १९.१६१० ॥

त्रैलोक्याधिपतिर्वीरः शशास त्रिदशान्बलिः ।

निःशेषभुवनाधीशमस्तकन्यस्तशासनः ॥ १९.१६११ ॥

सुरराज्ये कथाशेषे प्राज्ये राज्ये सुरद्विषाम् ।

सुराश्चतुर्मुखगिरा त्राणां नारायणं ययुः ॥ १९.१६१२ ॥

अव्यक्तरूपो भगवन्गीर्वाणैरर्थितो विभुः ।

विवेश योगाददितेर्गर्भं वार्षसहस्रिकम् ॥ १९.१६१३ ॥

स काश्यपस्ततो विष्णुः श्यामो वामनविग्रहः ।

अजायत जगच्च्येष्ठो बालः श्रेष्ठो दिवौकसाम् ॥ १९.१६१४ ॥

अत्रान्तरे बडि(लिर्)धीमानश्वमेधाय दीक्षितः ।

बभूव सर्वकामानां दाता कल्पद्रुमोऽर्थिषु ॥ १९.१६१५ ॥

तस्य यज्ञभुवं देवो बृहस्पतिसखः स्वयम् ।

गत्वा विवेश त्रिशिखः किरीटि छत्रदण्डवत् ॥ १९.१६१६ ॥

श्यामं पद्मपलाशाक्षं चलत्कुटिलकुन्तलम् ।

तं लावण्यमयं वीक्षअय ययौ निश्चलतां बडिः(लिः) ॥ १९.१६१७ ॥

दैत्येन्द्रं स समभ्येत्य महात्मा वामनाकृतिः ।

उवाच मधुरोदारगिरा वर्षन्निवामृतम् ॥ १९.१६१८ ॥

महेन्द्रस्य कुबेरस्य चन्द्रस्य वरुमस्य च ।

ब्रह्मणश्चाभवद्यज्ञस्त्वत्क्रतुश्च विराजते ॥ १९.१६१९ ॥

यज्ञानामश्वमेधोऽयं वरस्त्वमिव देहिनाम् ।

श्रुत्वेति वामनवचः पूतात्मा बडि(लि)रभ्यधात् ॥ १९.१६२० ॥

इदं ते दर्शनं साधो प्रीणाति मम मानसम् ।

श्रोत्रशुक्तिसुधाधारा वाणी ते कस्य न प्रिया ॥ १९.१६२१ ॥

ददानि किं तेऽभिमतं त्वादृशां हि महात्मनाम् ।

शरीरमपि नादेयं किं पुनर्बाह्यतश्चिरम् ॥ १९.१६२२ ॥

इत्युक्ते बडि(लि)ना प्रीत्या प्रत्यभाषत वामनः ।

दन्तत्विषा मुहुः कुर्वन्क्षीरक्षालितमम्बरम् ॥ १९.१६२३ ॥

पदत्रयं त्वया मह्यं गुर्वर्थं संप्रदीयताम् ।

अतः परं भवत्प्रीतिं बहु मन्ये प्रियंवद ॥ १९.१६२४ ॥

श्रुत्वेति विस्मितमना बडिः(लिः) प्रोवाच सस्मितः ।

दाता बडि(लिर्)भवानर्थी त्रिपदी दीयतां कथम् ॥ १९.१६२५ ॥

दयितं बहुमानं मे यथेष्टं गृह्यतां मुने ।

ससागरगिरीन्द्रापि स्वल्पा ते रत्नसूर्मही ॥ १९.१६२६ ॥

इत्युच्छमानेऽपि यदा ययाचे नाधिकं हरिः ।

हस्तोदकं तदा प्रादाद्बडि(लिर्)लज्जानताननः ॥ १९.१६२७ ॥

ततः प्रववृधे देवः सर्वदेवमयो विभुः ।

व्याप पद्भ्यां वसुमतीं शिरसा च दिवं क्षणात् ॥ १९.१६२८ ॥

तस्य प्रवर्धमानस्य त्रैलोक्याक्रान्तिकारिणः ।

ब्रह्मण्डमानदण्डोऽभूदण्डपादोऽन्तरिक्षगः ॥ १९.१६२९ ॥

जगत्पर्याप्तमेतन्मे न संपूर्णे पदद्वये ।

इतीव कम्पविलुठद्गिरिशब्दैर्जगाद सः ॥ १९.१६३० ॥

यः पूर्वमभवद्रत्नं मुकुटे प्राप्तमौक्तिके ।

वक्त्रे स्मितांशुचक्रं च शनैः शङ्खोऽपि वक्षसि ॥ १९.१६३१ ॥

व्योम्नि चन्द्रः स एवास्य परमाक्रन्तिकारिणः ।

ऊरुमाले जगामाशु स्रग्दाम सितपद्मताम् ॥ १९.१६३२ ॥

ब्रह्मणा क्षालिते तस्य पादपद्मे इवाम्बुभिः ।

जाता हरजटाजूटमाला जगति जाह्नवी ॥ १९.१६३३ ॥

इति त्रैलोक्यमात्क्रम्य हृत्वा दैत्यपतेः क्षणात् ।

सुतले नाम्नि पातालतले तस्यादिशत्स्थितिम् ॥ १९.१६३४ ॥

अहो महोदधिस्फीतं सत्त्वं बलवतो बलेः ।

येन स्वकायबन्धेन दानशेषो विशोधितः ॥ १९.१६३५ ॥

विस्मिताश्च प्रहृष्टाश्च लज्जिताः कम्पितास्तथा ।

बभूवुः सुरगन्धर्वसिद्धचारणकिंनराः ॥ १९.१६३६ ॥

हत्वा दितिजसंघातं बडे(लेर्)वृत्तिमकल्पयत् ।

अश्रद्धया हुतं दत्तं श्राद्धमश्रोत्रियं तथा ॥ १९.१६३७ ॥

अमन्त्रमव्रतं यश्च यज्ञादिकमदक्षिणम् ।

विधिहीनं यदन्यच्च तदस्मै प्रददौ हरिः ॥ १९.१६३८ ॥

ततो निजपदे देवान्यथास्थानं निवेश्य सः ।

आदिदेश सुरेन्द्रस्य श्रियं स्रजमिवोज्ज्वलाम् ॥ १९.१६३९ ॥

इति ते चरितं पुण्यं देवस्य कमलापतेः ।

प्रादुर्भावप्रसङ्गेन कथितं किल्बिषापहम् ॥ १९.१६४० ॥

त्रैलोक्याक्रान्तिलीलोदितचरणनखखच्छकान्तिप्रवाहैः कुर्वन्ब्रह्माण्डमूर्ध्नि प्रसृतसुरसरिद्वैजयन्तीविलासम् ।

प्रोद्भूतब्रह्मपद्मप्रतिमपरिसरन्नाभिलग्नार्कबिम्बं निःशेषातङ्कशान्त्यै भवतु भगवतो रूपमत्यद्भुतं नः ॥ १९.१६४१ ॥

- - - - - वामप्रादुर्भावः ॥ ५० ॥ *****

इति क्षेमेन्द्रविरचितायां भारतमञ्जर्यां परिपूर्णो हरिवंशः ।

काश्मीरिको गुणाधारः प्रकाशेन्द्राभिधोऽभवत् ।

नानार्थिसार्थसंकल्पपूरणे कल्पपादपः ॥ १९.*१ ॥

संपूर्णदानसंतुष्टाः प्राहुस्तं ब्राह्मणाः सदा ।

इन्द्र एवासि किंत्वेकः प्रकाशस्ते गुणोऽधिकः ॥ १९.*२ ॥

यस्य मेरोरिवोदाराः कल्याणपूर्णसंपदः ।

अवारितमभूद्गेहे भोज्यसत्त्रं द्विजन्मनाम् ॥ १९.*३ ॥

सूर्यग्रहे त्रिभिर्लक्षैर्दत्त्वा कृष्णाजिनत्रयम् ।

अल्पप्रदोऽस्मीत्यभवत्क्षणं लज्जानताननः ॥ १९.*४ ॥

स्वयंभूशंभुविजये यः प्रतिष्ठाप्य देवताः ।

दत्त्वा कोटिचतुर्भागं देवद्विजमठादिषु ॥ १९.*५ ॥

पूजयित्वा स्वयं शर्वं प्रसरद्बाष्पनिर्झरः ।

गाढं दोर्भ्यां समालिङ्ग्य यस्तत्रैव व्यपद्यत ॥ १९.*६ ॥

क्षेमेन्द्रनामा तनयस्तस्य विद्वत्सपर्यया ।

प्रयातः कविगोष्ठीषु नामग्रहणयोग्यताम् ॥ १९.*७ ॥

आचार्यशेखरमणेर्विद्याविवृतिकारिणः ।

श्रुत्वाभिनवगुप्ताख्यात्साहित्यं बोधवारिधेः ॥ १९.*८ ॥

श्रीमद्भागवताचार्यसोमपादब्जरेणुभिः ।

धन्यतां यः परां प्राप्तो नारायणपरायणः ॥ १९.*९ ॥

कदाचिद्ब्राह्मणेनैत्य स रामयशसार्थितः ।

संक्षिप्तां भारतकथां कुरुष्वेत्यार्यचेतसा ॥ १९.*१० ॥

स तमूचे करोम्येव प्रागेतच्चरितं मम ।

दृष्टः सत्यवतीसूनुः स्वप्ने ज्ञाननिधिर्ददौ ॥ १९.*११ ॥

तं नमस्कृत्य वरदं सज्जोऽहं त्वत्समीहिते ।

इत्युक्त्वा स्वप्नदृष्टस्य मुनेस्तुष्टव तद्वपुः ॥ १९.*१२ ॥

नमो ज्ञानानलशिखापुञ्जपिङ्गजटाभृते ।

कृष्णायाकृष्णमहसे कृष्णद्वैपायनाय ते ॥ १९.*१३ ॥

नमस्तेजोमयश्मश्रुप्रभाशबलितत्विषे ।

वक्त्रवागीश्वरीपद्मरजसेवोदितश्रिये ॥ १९.*१४ ॥

नमः संध्यासमाधाननिष्पीतरवितेजसे ।

त्रैलोक्यतिमिरोच्छेददीपप्रतिमचक्षुषे ॥ १९.*१५ ॥

नमः सहस्रशाखाय धर्मोपवनशाखिने ।

सत्त्वप्रतिष्ठापुष्पाय निर्वाणफलशालिने ॥ १९.*१६ ॥

नमः कृष्णाजिनजुषे बोधनन्दनवासिने ।

व्याप्तायेवालिजालेन पुण्यसौरभलिप्सया ॥ १९.*१७ ॥

नमः शशिकलाकारब्रह्मसूत्रांशुशोभिने ।

श्रिताय हंसकान्त्येव संपर्कार्कमलौकसः ॥ १९.*१८ ॥

नमो विद्यानदीपूर्णशास्त्राब्धिसकलेन्दवे ।

पीयूषरससाराय कविव्यापारवेधसे ॥ १९.*१९ ॥

नमःसत्यनिवासाय स्वविकाशविलासिने ।

व्यासाय धाम्ने तपसां संसारायासहारिणे ॥ १९.*२० ॥

- 
- 
- 
- 
- व्यासाष्टकस्तोत्रम् ॥ ५१ ॥ *****

इति व्यासाष्टकं कृत्वा महाभारतमञ्जरीम् ।

सचक्रे विबुधानन्दसुधास्यन्दतरङ्गिणीम् ॥ १९.*२१ ॥

**समाप्तेयं महाभारतमञ्जरी कृतिः कवेर्व्यासदासापनाम्नः प्रकाशेन्द्रसूनोः क्षेमेन्द्रस्य ॥**

अहो कविसरस्वत्या विचित्रेयं प्रसन्नता ।

सद्यो मलिनता वक्त्रे खलानां जायते यया ॥ १९.**१ ॥

मद्वचोदर्पणतले महाभारतदिग्द्विपः ।

समस्तावयवोऽप्येष मुष्टिमेय इवेक्ष्यते ॥ १९.**२ ॥

रत्नोदारचतुःसमुद्ररशनां भुक्त्वा भुवं कौरवो भग्नोरुः पतितः स निष्परिजने जीवन्वृकैर्भक्षितः ।

गौपैर्विश्वजयी जितः स विजयः कक्षैः क्षिता वृष्णयस्तस्मात्सर्वमिदं विचार्य सुचिरं शान्त्यै मनो दीयताम् ॥ १९.**३ ॥

फुल्लेन्दीवरसुन्दरद्युतिमुषः शौरेः शरीरत्विषः पायासुर्निजनाभिपङ्कजरजोलुब्धालिमालोपमाः ।

याः कुर्वन्ति शशाङ्कबिम्बविषदे लक्ष्मीमुखाब्जे मुहुः कस्तूरीरसपत्त्रभङ्गसुभगा लक्ष्मीमुखाब्जे मुहः कस्तूरीरसपत्त्रभङ्गसुभगा लक्ष्मीप्रभाविभ्रमम् ॥ १९.**४ ॥

एष विष्णुकथातीर्थपुण्यवत्सलिलोक्षितः ।

प्राप्तः सामान्यजल्पोऽपि क्षेमेन्द्रोऽद्य कवीन्द्रताम् ॥ १९.**५ ॥

॥ शुभं भूयात् ॥